॥ ततः प्रविशति विदूषकः ॥

विदूषकः । ॥ निःश्वस्य ॥ ही माणहे भो । हदो म्हि एदस्स मिअआसीलस्स रण्णो वअस्सभावेण णिव्विण्णो । अअं मिओ अअं वराहो त्ति मज्झंदिणे वि गिम्हे विरलपादवच्छाआसुं वणराईसुं आहिण्डिअ पत्तसंकरकसाअविरसाइं उण्हकडुआइं पिवीअन्ति गिरिणदीसलिलाइं । अणिअदवेलं च उण्हुण्हं मंसं भुञ्जीअदि । तुरअगआणं च सद्देण रत्तिं पि णत्थि पकामसुइदव्वं । महन्ते ज्जेव पच्चूसे दासीएपुत्तेहिं साउणिअलुद्धेहिं कण्णोवघादिणा वणगमणकोलाहलेण पबोधीआमि । एत्तिकेणावि दाव पीडा ण णुत्ता जदो गण्डस्स उवरि विप्फोडओ संवुत्तो । जेण किल अम्हेसुं अवहीणेसुं तत्थभवदा मिआणुसारिणा अस्समपदं पविट्ठेण मम अधण्णदाए सउन्तला णाम का वि तावसकण्णआ दिट्ठा । तं पेक्खिअ संपदं णअरगमणस्स कधं पि ण करेदि । एदं जेव चिन्तअन्तस्स मम पहादा अच्छीसुं रअणी । ता का गदी । जाव णं किदाआरपरिकम्मं पिअवअस्सं पेक्खामि । ॥ परिक्रम्यावलोक्य च ॥ एसो बाणासणहत्थो हिअणिहिदपिअअणो वणपुप्फमालाधारी इदो ज्जेव आअच्छदि पिअवअस्सो । भोदु । अङ्गभङ्गविअलो भविअ चिट्ठिस्सं । एवं पि णाम विस्सामं लहेअं । ॥ इति दण्डकाष्ठमवलम्ब्य स्थितः ॥

॥ ततः प्रविशति यथानिर्दिष्टो राजा ॥

राजा । ॥ आत्मगतम् ॥

कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि ।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते ॥ १ ॥

॥ स्मितं कृत्वा ॥ एवमात्माभिप्रायसंभावितेष्टजनचित्तवृत्तिः प्रार्थयिता विप्रलभ्यते । कुतः ।

स्निग्धं वीक्षितमन्यतो ऽपि नयने यत्प्रेरयन्त्या तया
यातं यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव ।
मा गा इत्युपरुद्धया यदपि तत्सासूयमुक्ता सखी
सर्वं तत्किल मत्परायणमहो कामः स्वतां पश्यति ॥ २ ॥

विदूषकः । ॥ तथा स्थित एव ॥ भो राअं । ण मे हत्था पसरदि । वाआमेत्तकेण जआवीअसि ।

राजा । ॥ विलोक्य सस्मितम् ॥ कुतो ऽयं गात्रोपघातः ।

विदूषकः । कथं कुदो त्ति । सअं जेव अच्छिं भञ्जिअ अस्सुकारणं पुच्छसि ।

राजा । न खल्ववगच्छामि । भिन्नार्थमभिधीयताम् ।

विदूषकः । जं वेदसो खुज्जस्स लीलं विडम्बेदि तं किं अत्तणो पहावेण अध णदीवेअस्स ।

राजा । नदीवेगस्तत्र कारणम् ।

विदूषकः । ममावि भवं ।

राजा । कथमिव ।

विदूषकः । जुत्तं णाम एदं जं तए रज्जकज्जाइं तादिसं च अक्खलिदपदं पदेसं उज्झिअ वणचरवित्तिणा भविदव्वं त्ति । किं एत्थ मन्तीअदु । अहं उण बम्हणो पच्चहं सावदाणुसरणेहिं संखोहिदसंधिबन्धणाणं अत्तणो अङ्गाणं अणीसो म्हि । ता पसीद । एकाहं दाव विस्समीअदु ।

राजा । ॥ स्वगतम् ॥ अयमेवमाह । ममापि कण्वसुतामनुस्मृत्य मृगयां प्रति निरुत्सुकं चेतः । तथा हि

न नमयितुमधिज्यमुत्सहिष्ये ———————— मृगेषु ।

यैः प्रियाया॰ कृत इव ले : ३

विदूषकः । ॥ राजानमवलोक्य ॥ अत्थभव किं पि हिअए कदुअ मन्तेदि । अरण्णे क्खु मए रुदिदं ।

3 राजा । ॥ सस्मितम् ॥ किमन्यत् । अनतिक्रमणीयं सुहृद्वाक्यमिति स्थितो ऽस्मि ।

विदूषकः । ॥ सपरितोषम् ॥ तेण हि चिरं मे जीव । ॥ इत्युत्थातुमिच्छति ॥

6 राजा । तिष्ठ । शृणु मे सावशेषं वचः ।

विदूषकः । आणवेदु भवं ।

राजा । विश्रान्तेन भवता ममान्यस्मिन्ननायासे कर्मणि सहायेन भवितव्यम् ।

9 विदूषकः । किं मोदअखज्जिआए ।

राजा । यद्वक्ष्यामि ।

विदूषकः । गहिदो खणो ।

12 राजा । कः को ऽत्र भोः ।

प्रविश्य दौवारिकः । आणवेदु भट्टा ।

राजा । रैवतक । सेनापतिस्तावदाहूयताम् ।

15 दौवारिकः । तथा । ॥ इति निष्क्रम्य पुनः सेनापतिना सह प्रविश्य ॥ एदु एदु अज्जो । एस आलावदिण्णकण्णो भट्टा इदो ज्जेव चिट्ठदि । उवसप्पदु णं अज्जो ।

18 सेनापतिः । ॥ राजानमवलोक्य स्वगतम् ॥ कथं दृष्टदोषापि मृगया स्वामिनि केवलं गुणायैव संवृत्ता । तथा हि देवः

अनवरतधनुर्ज्यास्फालनक्रूरकर्मा
रविकिरणसहिष्णुः स्वेदलेशैरभिन्नः ।
अपचितमपि गात्रं व्यायतत्वादलक्ष्यं
गिरिचर इव नागः प्राणसारं बिभर्ति ॥ ४ ॥

उपगम्य जयति जयति स्वामी स्वामिन्
पदमरण्यम् । तत्किमन्यदनुष्ठीयताम् ।

राजा । भद्रसेन । मन्दोत्साहः कृतो ऽस्मि मृगयापवादिना माधव्येन ।

सेनापतिः । ॥ अपवार्य ॥ सखे माधव्य । दृढप्रतिज्ञो भव । अहं तावत्स्वामिनश्चित्तमनुवर्तिष्ये । ॥ प्रकाशम् ॥ देव । प्रलपत्येष वैधेयः । ननु प्रभुरेव निदर्शनम् । पश्यतु देवः ।

मेदश्छेदकृशोदरं लघु भवत्युत्साहयोग्यं वपुः
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः ।
उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले
मिथ्या हि व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥ ५ ॥

विदूषकः । ॥ सरोषम् ॥ अवेहि रे उच्छाहइत्तआ अवेहि । अत्थभवं पइदिं आवण्णो । तुमं दाव दासीएपुत्तो अडईदो अडइं आहिण्ड जाव सिआलमिअलोलुवस्स कस्स वि जुण्णरिच्छस्स मुहे णिवडिदो होसि ।

राजा । भद्रसेन । आश्रमसंनिकृष्टे स्थितो ऽस्मीति वचस्ते नाभिनन्दामि । अद्य तावत्

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।
विस्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥ ६ ॥

सेनापतिः । यथा प्रभविष्णवे रोचते ।

राजा । तेन हि निवर्तय पूर्वंगतान्धनुर्ग्राहिणः । यथा च सैनिकास्तपोवनं नाभिरुन्धन्ति दूरात्परिहरन्ति च तथा निषेद्धव्याः । पश्य ।

शमप्रधानेषु तपोधनेषु
गूढं हि दाहात्मकमस्ति तेजः

स्पर्शानुकूला अपि सूर्यकान्ता
स्ते ह्यन्यतेजोऽभिभवाद्दहन्ति ॥ ७ ॥

सेनापतिः । यथाज्ञापयति स्वामी ।

विदूषकः । भो उच्छाहइत्तआ । णिक्कम णिक्कम । ॥ सेनापतिर्निष्क्रान्तः ॥

3 राजा । ॥ परिजनमवलोक्य ॥ मृगयावेषमपनयन्तु भवन्तः । रैवतक । त्वमपि स्वनियोगमशून्यं कुरु ।

रैवतकः । जं महाराओ आणवेदि । ॥ इति निष्क्रान्तः ॥

6 विदूषकः । किदं भवदा णिम्मक्खिअं । ता इमस्सिं पादवच्छाआविरइद-विदाणसणाधे सिलादले उवविसदु भवं जाव अहं पि सुहासीणो होमि ।

राजा । गच्छाग्रतः ।

9 विदूषकः । एदु एदु भवं । ॥ उभौ परिक्रम्योपविष्टौ ॥

राजा । सखे माधव्य । अनवाप्तचक्षुःफलो ऽसि येन त्वया द्रष्टव्यानां परं न दृष्टम् ।

12 विदूषकः । णं भवं जेव मे अग्गदो वट्टदि ।

राजा । सर्वः खलु कान्तमात्मानं पश्यति । अहं तु तामेवाश्रमललामभूतां शकुन्तलामधिकृत्य ब्रवीमि ।

15 विदूषकः । ॥ स्वगतम् ॥ भोदु । ण से पसरं वड्ढाइस्सं । ॥ प्रकाशम् ॥ भो । जदो सा तावसकण्णआ अणब्भत्थणीआ तदो ताए किं दिट्ठाए ।

राजा । मूर्ख ।

निराकृतनिमेषाभिर्नेत्रपङ्क्तिभिरुन्मुखः ।
नवामिन्दुकलां लोकः केन भावेन पश्यति ॥ ८ ॥

न च परिहार्ये वस्तुनि दुःषन्तस्य मनः प्रवर्तते ।

विदूषकः । ता कधेहि ।

18 राजा ।

किल मुनेरपत्यं तदुज्झिताधिगतम्
अर्कस्योपरि शिथिलं च्युतमिव नवमालिकाकुसुमम् ॥ ९

विदूषकः। ॥ विहस्य ॥ भो। जधा कस्स वि पिण्डखज्जूरेहिं तिन्तिडिआए सद्धा भोदि तधा अन्तेउरइत्थीरदणपरिभोइणो 3 पत्थणा।

राजा। सखे। न तावदेनां पश्यसि येन त्वमेवंवादी।

विदूषकः। तं खु रमणीअं णाम जं भवदो वि विम्हअं

6 राजा। वयस्य। किं बहुना।

चित्ते निवेश्य परिकल्पितसर्वयोगा-
द्रूपोच्चयेन महता मनसा कृता नु।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥ १० ॥

विदूषकः। सव्वधा पच्चादेसो क्खु सा रूववदीणं।

राजा। इदं च मे मनसि वर्तते।

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रनामुक्तं रत्नं मधु नवमनास्वादितरसम्।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति भुवि ॥ ११

विदूषकः। तेण हि लहुं लहुं गच्छदु भवं मा दाव सा कस्स वि इङ्गुदीतेल्लचिक्कणसीसस्स हत्थे णिवडिस्सदि।

5 राजा। परवती खलु तत्रभवती न च संनिहितगुरुजना।

विदूषकः। अध तुह उवरि कीदिसो उण से चित्तराओ।

राजा। वयस्य। स्वभावादप्रगल्भास्तपस्विकन्यकाः। तथापि

अभिमुखे मयि संहृतमीक्षितं

थोदयम्

विनयवारितवृत्तिरतस्तया
न मदनो विवृतो न च संवृतः ॥ १२ ॥

विदूषकः । किं णु क्खु दिट्ठमेत्तस्स ज्जेव भवदो अङ्कं आरोहदु ।

राजा । सखीभ्यां मिथःप्रस्थाने पुनस्तत्रभवत्या मयि भूयिष्ठमाविष्कृ-
तभावः । तथा हि

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कति चिदेव पदानि गत्वा ।
आसीद्विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥ १३ ॥

विदूषकः । गहिदपाधेओ किदो सि ताए । ता अणुरत्तं तवोवणे तुमं तक्केमि

राजा । सखे । चिन्तय तावत्केनापदेशेन पुनराश्रमपदं गच्छामः ।

विदूषकः । को अवरो अवदेसो । णं भवं राआ ।

राजा । ततः किम् ।

विदूषकः । णीवारछट्ठभाअं मे तावसा उवहरन्तु त्ति ।

राजा । मूर्ख । अन्यमेव भागमेते तपस्विनो निर्वपन्ति यो रत्नराशीन्
विहायाभिनन्द्यते । पश्य ।

यदुत्तिष्ठति वर्णेभ्यो नृपाणां क्षयि तद्धनम् ।
तपःषड्भागमक्षय्यं ददत्यारण्यका हि नः ॥ १४ ॥

नेपथ्ये । हन्त । सिद्धार्थौ स्वः ।

राजा । ॥ आकर्ण्य ॥ अये । धीरप्रशान्तः स्वरः । तत्तपस्विभिर्भवितव्यम्

प्रविश्य दौवारिकः । जअदु जअदु भट्टा । एदे क्खु दुवे इसिकुमारआ
पडिहारभूमिं उवट्ठिदा ।

राजा । अविलम्बितं प्रवेशय ।

ज भङ्गा आणवेदि । इति निष्क्रम्य सहापकुमारकाभ्यां स
। एध ।

। राजानमवलोक्य ॥ अहो । दीप्तिमतो ऽपि विश्वसनी
। उपपन्नमेवैतदृषिकल्पे राजनि । कुतः ।

अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये
रक्षायोगादयमपि तपः प्रत्यहं संचिनोति ।
अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः
पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः ॥

। सखे । अयं स बलभित्सखो दुःषन्तः ।

अथ किम् ।

तेन हि

नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्री-
मेकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति ।
आशंसन्ते समितिषु सुराः सक्तवैरा हि दैत्यै-
रस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे ॥ १६

उपेत्य ॥ विजयस्व राजन् ।

। आसनादुत्थाय ॥ अभिवादये भवन्तौ ।

स्वस्ति भवते । ॥ इति फलान्युपनयतः ॥

। सप्रणामं प्रतिगृह्य ॥ आगमनप्रयोजनं ज्ञातुमिच्छामि ।

विदितो भवानिह स्थितस्तपस्विभिस्ते च भवन्तमभ्य
किमाज्ञापयन्ति ।

त्रभवतः कुलपतेरसांनिध्याद्रक्षांसि नस्तपोविघ्नमुत्पाद
त्रं सारथिद्वितीयेन भवता सनाथीक्रियतामाश्रम इति

अनुगृहीतो ऽस्मि ।

विदूषक अपवार्य अअ दाणि दे अणुऊलो गलहत्थो
राजा । रैवतक । उच्यतामस्मत्सारथिः सबाणकार्मुकं रथमुपस्थाप
रैवतकः । जं देवो आणवेदि । ॥ इति निष्क्रान्तः ॥
ऋषी ।

अनुकारिणि पूर्वेषां युक्तरूपमिदं त्वयि ।
आपन्नाभयसत्त्रेषु दीक्षिताः खलु पौरवाः ॥ १७ ॥

राजा । गच्छतां भवन्तौ । अहमप्यनुपदमागत एव ।
ऋषी । विजयस्व । ॥ इति निष्क्रान्तौ ॥
राजा । माधव्य । अप्यस्ति ते शकुन्तलादर्शनं प्रति कुतूहलम् ।
विदूषकः । पढमं अपरिबाधं आसि । संपदं रक्खसवुत्तन्तेण स
राजा । मा भैषीः । ननु मत्समीप एव वर्तिष्यसे ।
विदूषकः । एसो क्खु तुह चक्करक्खी भूदो म्हि ।
प्रविश्य दौवारिकः । सज्जो रधो भट्टिणो विजअपत्थाणं अवेक्खदि
उण णअरादो देवीणं सआसादो करभओ आअदो ।
राजा । ॥ सादरम् ॥ किमार्याभिः प्रेषितः ।
दौवारिकः । अध इं ।
राजा । तेन हि प्रवेश्यताम् ।
दौवारिकः । ॥ निष्क्रम्य पुनः करभकेण सह प्रविश्य ॥ करभअ । एसो
उवसप्पदु भवं ।
करभकः । ॥ उपसृत्य प्रणम्य च ॥ जअदु जअदु भट्टा । देवीओ
वेन्ति ।
राजा । किमाज्ञापयन्ति ।
करभकः । आगामिचदुत्थदिअसे पुत्तपिण्डपारणो णाम उववासो भवि
तत्थ दीहाउणा अवस्सं अम्हे संभाविदव्वाओ त्ति ।

राजा । इतस्तपस्विकार्यमितो गुरुजनाज्ञा । उभयमप्यनतिक्रमणीयम् । तत्किमत्र प्रतिविधेयम् ।

विदूषकः । ॥ विहस्य ॥ भो । तिसङ्कू विअ अन्तरा चिट्ठ ।

राजा । सत्यमाकुलीकृतो ऽस्मि ।

कृत्ययोर्भिन्नदेशत्वाद्द्वैधीभवति मे मनः ।
पुरः प्रतिहतं शैले स्रोतः स्रोतोवहं यथा ॥ १८ ॥

॥ विचिन्त्य ॥ सखे । त्वमार्याभिः पुत्र इव गृहीतः । स भवानितः प्रतिनिवृत्त तपस्विकार्यव्यग्रतामस्माकं निवेद्य तत्रभवतीनां पुत्रकार्यमनुष्ठातुमर्हति ।

विदूषकः । भो । मा रक्खसभीरुअं मं अवगच्छ ।

राजा । ॥ स्मितं कृत्वा ॥ भो महाब्राह्मण । कथमिदं त्वयि संभाव्यते ।

विदूषकः । तेण हि राआणुओ विअ गन्तुं इच्छामि ।

राजा । ननु तपोवनोपरोधः परिहरणीय इति सर्वानेवानुयात्रिकांस्त्व सह प्रेषयामि ।

विदूषकः । ॥ सगर्वम् ॥ ही ही । जुअराओ म्हि संवुत्तो ।

राजा । ॥ आत्मगतम् ॥ चपलो ऽयं वटुः कदा चिदिमामस्मत्प्रार्थनाम न्तःपुरेभ्यो निवेदयेत् । भवत्वेवं तावत् । ॥ विदूषकं हस्ते गृहीत्वा प्रकाशम् ॥ सखे माधव्य । ऋषिगौरवादाश्रमपदं गच्छामि । न खलु सत्यमेव तापसकन्यायामभिलाषो मे । पश्य ।

क्व वयं क्व परोक्षमन्मथो मृगशावैः सह वर्धितो जनः ।
परिहासविकल्पितं सखे परमार्थेन न गृह्यतां वचः ॥ १९ ॥

विदूषकः । एवं णेदं ।

॥ इति निष्क्रान्ताः सर्वे ॥

॥ इत्याख्यानगुप्तिर्नाम द्वितीयो ऽङ्कः ॥

॥ ततः प्रविशति कुशानादाय यजमानशिष्यः ॥

शिष्यः । ॥ विचिन्त्य सविस्मयम् ॥ अहो । महाप्रभावो राजा दुःषन्तः । येन प्रविष्टमात्र एवात्रभवति निरुपप्लवानि नः कार्याणि संवृत्तानि ।

का कथा बाणसंधाने ज्याशब्देनैव दूरतः ।
हूंकारेणेव धनुषः स हि विघ्नान्व्यपोहति ॥ १ ॥

यावदिमान्वेदीसंस्तरणार्थं दर्भानृत्विग्भ्य उपहरामि । ॥ परिक्रम्यावलोक्य च आकाशे ॥ प्रियंवदे । कस्येदमुशीरानुलेपनं मृणालवन्ति च नलिनीदलानि नीयन्ते । ॥ आकर्ण्य ॥ किं ब्रवीषि । आतपलङ्घनाद्बलवदस्वस्थशरीरा शकुन्तला । तस्याः शरीरनिर्वापणायेति । प्रियंवदे । यत्नादुपचर्यताम् । सा हि तत्रभवतः कुलपतेरुच्छ्वसितम् । अहमपि वैतानं शान्त्युदकमस्या एव गौतमीहस्ते विसर्जयिष्यामि । ॥ इति निष्क्रान्तः ॥

॥ प्रवेशकः ॥

॥ ततः प्रविशति मदनावस्थो राजा ॥

राजा । ॥ सचिन्तं निःश्वस्य ॥

जाने तपसो वीर्यं सा बाला परवतीति मे विदितम् ।
न च निम्नादिव सलिलं निवर्तते मे ततो हृदयम् ॥ २ ॥

भगवन्मन्मथ । कुतस्ते कुसुमायुधस्य सतस्तैक्ष्ण्यमेतत् । ॥ स्मृत्वा ॥ आं ज्ञातम् ।

अद्यापि नूनं हरकोपवह्नि-
स्त्वयि ज्वलत्यौर्व इवाम्बुराशौ ।

त्वमन्यथा मन्मथ मद्विधाना

भस्मावशेषः कथमेवमुष्णः ॥ ३ ॥

अपि च । त्वया चन्द्रमसा च विश्वसनीयाभ्यामभिसंधीयते कामि

कुतः ।

तव कुसुमशरत्वं शीतरश्मित्वमिन्दो -

र्द्वयमिदमयथार्थं दृश्यते मद्विधेषु ।

विसृजति हिमगर्भैरग्निमिन्दुर्मयूखै -

स्त्वमपि कुसुमबाणान्वज्रसारीकरोषि ॥ ४ ॥

अथ वा ।

अनिशमपि मकरकेतुर्मनसो रुजमावहन्नभिमतो मे ।

यदि मदिरायतनयनां तामधिकृत्य प्रहरतीति ॥ ५ ॥

भगवन् । एवमुपालब्धस्य ते न मां प्रत्यनुक्रोशः ।

वृथैव संकल्पशतैरजस्र -

मनङ्ग नीतो ऽसि मयातिवृद्धिम् ।

आकृष्य चापं श्रवणोपकण्ठे

मय्येव युक्तस्तव बाणमोक्षः ॥ ६ ॥

क नु खलु निरस्तविघ्नैस्तपस्विभिरनुज्ञातः खिन्नमात्मानं विनोद

॥ निःश्वस्य ॥ न च प्रियादर्शनादृते शरणमन्यत् । ॥ ऊर्ध्वमवल

इमामुग्रातपां वेलां प्रायेण लतावलयवत्सु मालिनीतीरेषु ससखीजन

भवती गमयति । भवतु । तत्रैव गच्छामि । ॥ परिक्रम्यावलोक्य च ॥

बालपादपवीथ्या सुतनुरचिरगतेति तर्कयामि । कुतः ।

संमीलन्ति न तावद्बन्धनकोशास्तयावचितपुष्पाः ।

क्षीरस्निग्धाश्चामी दृश्यन्ते किसलयच्छेदाः ॥ ७ ॥

स्पर्शं रूपयित्वा । अहो प्रवातसुभगो ऽयं वनोद्देशः

शक्यो ऽरविन्दसुरभिः कणवाही मालिनीतरङ्गाणाम्
अङ्गैरनङ्गतप्तैर्निर्दयमालिङ्गितुं पवनः ॥ ८ ॥

॥ विलोक्य ॥ हन्त । अस्मिन्नेव वेतसलतामण्डपे भवितव्यं शकुन्तलया । तथा हि

अभ्युन्नता पुरस्तादवगाढा जघनगौरवात्पश्चात् ।
द्वारे ऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यते ऽभिनवा ॥ ९ ॥

यावद्विटपान्तरेणावलोकयामि । ॥ तथा कृत्वा सहर्षम् ॥ अये । लब्धं नेत्रनिर्वाणम् । एषा मनोरथप्रिया मे कुसुमास्तरणशिलापट्टमधिशयाना सखी-
3 भ्यामुपास्यते । भवतु । शृणोमि तावदासां विस्रम्भकथितानि । ॥ इति विलोकयन्स्थितः ॥

॥ ततः प्रविशति सह सखीभ्यां शकुन्तला ॥

6 सख्यौ । ॥ उपवीज्य ॥ हला सउन्तले । अवि सुहाअदि दे णलिणीवत्तवादो ।
शकुन्तला । ॥ सखेदम् ॥ किं वीअअन्ति मं पिअसहीओ । ॥ उभे सविषादं परस्परमवलोकयतः ॥

9 राजा । बलवदसुस्थशरीरा तत्रभवती दृश्यते । ॥ सवितर्कम् ॥ तत्किमयमातपदोषः स्यादुत यथा मे मनसि वर्तते । ॥ विचिन्त्य ॥ अथ वा कृतं संदेहेन ।

स्तनन्यस्तोशीरं प्रशिथिलमृणालैकवलयं
प्रियायाः साबाधं तदपि कमनीयं वपुरिदम् ।
समस्तापः कामं मनसिजनिदाघप्रसरयो-
र्न तु ग्रीष्मस्यैवंसुभगमपराद्धं युवतिषु ॥ १० ॥

प्रियंवदा । ॥ जनान्तिकम् ॥ अणुसूए । तस्स राएसिणो पढमदंसणादो

आरम्भिअ पज्जुस्सुअमणा सउन्तला । ण क्खु मे अण्णणिमित्तो आदङ्को भवे ।

अनुसूया । ममावि एरिसी आसङ्का । भोदु । पुच्छिस्सं । सहि । पुच्छिदव्वा सि किं पि । बलीओ क्खु अङ्गसंतावो ।

राजा । वक्तव्यमेव ।

शशिकरविशदान्यस्यास्तथा हि दुःसहनिदाघशंसीनि ।
भिन्नानि श्यामिकया मृणालनिर्माणवलयानि ॥ ११ ॥

शकुन्तला । ॥ पूर्वार्धेन शयनादुत्थाय ॥ हला । भण जं वत्तुकामा सि ।

अनुसूया । हला सउन्तले । अणब्भन्तराओ अम्हे मणोगदस्स दे वुत्तन्तस्स । किं तु जादिसी इदिहासकधाणुबन्धेसुं कामअमाणाणं अवत्था सुणीअदि तादिसी तुह त्ति तक्केमि । ता कधेहि किं णिमित्तं दे अअं आआसो । विआरं परमत्थदो अआणिअ अणारम्भो क्खु पडीआरस्स ।

राजा । अनुसूययापि मदीयस्तर्को ऽनुगतः ।

शकुन्तला । बलीओ क्खु मे आआसो । ण सहसा सक्कणोमि णिवेदिदुं ।

प्रियंवदा । सहि । सुट्ठु क्खु एसा भणादि । किं एदं अत्तणो उवद्दवं णिगूहसि । अणुदिअसं च परिहीअसि अङ्गेसुं । केवलं लावण्णमई छाआ तुमं ण मुञ्चेदि ।

राजा । अवितथमाह प्रियंवदा । तथा ह्यस्याः

क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं
मध्यः क्लान्ततरः प्रकामविनतावंसौ छविः पाण्डुरा ।
शोच्या च प्रियदर्शना च मदनग्लानेयमालक्ष्यते
पत्त्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी ॥ १२ ॥

शकुन्तला । ॥ निःश्वस्य ॥ कस्स वा अण्णस्स कधइस्सं । किं तु आआसइत्तिआ वो भविस्सं ।






उभे । सहि । [illegible] ज्जेव णो णिब्बन्धो । संविभत्तं खु दुक्ख
अणं भोदि ।

राजा ।

पृष्टा जनेन समदुःखसुखेन बाला
नेयं न वक्ष्यति मनोगतमाधिहेतुम् ।
दृष्टो निवृत्य बहुशो ऽप्यनया सतृष्ण -
मत्रोत्तरश्रवणकातरतां गतो ऽस्मि ॥ १३ ॥

शकुन्तला । जदो पहुदि सो तवोवणरक्खिदा राएसी मम
गदो । ॥ इत्यर्धोक्ते लज्जां नाटयति ॥

उभे । कधेदु पिअसही ।

शकुन्तला । तदो पहुदि तग्गदेण अहिलासेण एदावत्थ म्हि ।

उभे । दिट्ठिआ । इदाणिं दे अणुरूवे वरे अहिणिवेसो । अध व
उज्झिअ कहिं वा महाणदीए पविसिदव्वं ।

राजा । ॥ सहर्षम् ॥ श्रुतं यच्छ्रोतव्यम् ।

स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः ।
दिवस इवाभ्रश्यामस्तपात्यये जीवलोकस्य ॥ १४ ॥

शकुन्तला । ता जइ वो अणुमदं तदो तधा पअत्तध जधा तस्स
अणुकम्पणीआ होमि । अण्णधा सुमरेध मं।

राजा । विमर्शच्छेदि वचनम् ।

प्रियंवदा । ॥ जनान्तिकम् ॥ अणुसूए । दूरगदमम्मधा अक्खमा
कालहरणस्स ।

अनुसूया । पिअंवदे । को उवाओ भवे जेण अविलम्बिदं
सहीए मणोरधं संपादेमो ।

प्रियवदा सहि णिहुदं ति पअत्तिदव्वं सिग्घं ति ण दुः

9 अनुसूया । कथं विअ ।

प्रियंवदा । णं सो वि राएसी इमस्सिं जणे सिणिद्धदिट्ठिसूइदाहिलासो इमेसुं दिअसेसुं पज्जाअरकिसो विअ लक्खीअदि ।

12 राजा । सत्यमित्थंभूत एवास्मि । तथा हि

अशिशिरतरैरन्तस्तापैर्विवर्णमणीकृतं

निशि निशि भुजन्यस्तापाङ्गप्रवर्तिभिरश्रुभिः ।

अनतिलुलितज्याघाताङ्कान्मुहुर्मणिबन्धना -

त्कनकवलयं स्रस्तं स्रस्तं मया प्रतिसार्यते ॥ १५ ॥

प्रियंवदा । ॥ विचिन्त्य ॥ हला अणुसूए । मअणलेहो दाणिं से करीअदु । तं अहं सुमणोगोविदं कदुअ देवदासेसावदेसेण तस्स रण्णो हत्थं पावइस्सं ।

3 अनुसूया । सहि । रोअदि मे सुउमारो एसो पओओ । किं वा सउन्तला भणादि ।

शकुन्तला । णिओओ वि विअप्पीअदि ।

6 प्रियंवदा । तेण हि अत्तणो उवण्णासाणुरूवं चिन्तेहि किं पि ललिदोवणिबन्धणं गीदअं ।

शकुन्तला । चिन्तइस्सं । किं तु अवहीरणाभीरुअं वेवदि मे हिअअं ।

9 राजा ।

अयं स ते तिष्ठति संगमोत्सुको

विशङ्कसे भीरु यतो ऽवधीरणाम् ।

लभेत वा प्रार्थयिता न वा श्रियं

श्रियो दुरापः कथमीप्सितो भवेत् ॥ १६ ॥

अपि च ।

अयं स यस्मात्प्रणयावधीरणा -

मशङ्कनीयां करभोरु शङ्कसे

उपस्थितस्त्वां प्रणयोत्सुको जनो
न रत्नमन्विष्यति मृग्यते हि तत् ॥ १७ ॥

सख्यौ । अइ अत्तगुणावमाणिणि । को णाम संतावणिव्वावइत्तिअं जोण्हं आदवत्तेण वारइस्सदि ।

शकुन्तला । ॥ सस्मितम् ॥ णिओइद म्हि । ॥ इति चिन्तयति ॥

राजा । स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि ।

उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः ।
पुलकाचितेन कथयति मय्यनुरागं कपोलेन ॥ १८ ॥

शकुन्तला । हला । चिन्तिदा मए गीदिआ । असंणिहिदाइं उ साहणाइं ।

प्रियंवदा । णं इमस्सिं सुओदरसिणिद्धे णलिणीवत्ते पत्तच्छेदभत्ती आलिहीअदु ।

शकुन्तला । सुणध दाव णं संगदत्था ण व त्ति ।

उभे । अवहिदाओ म्ह ।

शकुन्तला । ॥ पठति ॥

तुज्झ ण आणे हिअअं मम उण मअणो दिवा अ रत्तिं च ।
णिक्किव दावइ वलिअं तुह हुत्तमणोरहाइ अङ्गाइं ॥ १९ ॥

राजा । ॥ सहसोपसृत्य ॥

तपति तनुगात्रि मदनस्त्वामनिशं मां पुनर्दहत्येव ।
ग्लपयति यथा शशाङ्कं न तथा हि कुमुद्वतीं दिवसः ॥ २० ॥

सख्यौ । ॥ विलोक्य सहर्षमुत्थाय ॥ साअदं जधासमीहिदफलस्स म्बिणो मणोरधस्स । ॥ शकुन्तला उत्थातुमिच्छति ॥

राजा । सुन्दरि । अलमलमायासेन ।

गुरुपरितापानि न ते गात्राण्युपचारमर्हन्ति ॥ २१ ॥

शकुन्तला । ॥ ससाध्वसमात्मगतम् ॥ हिअअ । तधा उत्तम्मिअ इदाणिं ण किं पि पडिवज्जसि ।

अनुसूया । इदो सिलादलेक्कदेसं अणुगेण्हदु महाराओ । ॥ शकुन्तला किंचिदपसरति ॥

राजा । ॥ उपविश्य ॥ प्रियंवदे । कच्चित्सखीं वो नातिबाधते शरीरतापः ।

प्रियंवदा । ॥ सस्मितम् ॥ लद्धोसधो संपदं उवसमं गमिस्सदि । महाराअ । दोण्णं पि वो अण्णोण्णाणुराओ पच्चक्खो । सहीसिणेहो उण पुणरुत्तवाइणिं करेदि मं ।

राजा । भद्रे । न तत्परिहार्यं यतो विवक्षितमनुक्तमनुतापं जनयति ।

प्रियंवदा । तेण हि सुणादु अज्जो ।

राजा । अवहितो ऽस्मि ।

प्रियंवदा । अस्समवासिणो जणस्स रण्णा अत्तिहरेण होदव्वं ति णं एसो धम्मो ।

राजा । अस्मात्परं किं तत् ।

प्रियंवदा । तेण हि इअं णो पिअसही तुमं उद्दिसिअ भअवदा मअणेण इमं अवत्थन्तरं पाविदा । ता अरिहसि अब्भुववत्तीए जीविदं से अवलम्बिदुं ।

राजा । भद्रे । साधारण एष प्रणयः । सर्वथानुगृहीतो ऽस्मि ।

शकुन्तला । ॥ सप्रणयकोपस्मितम् ॥ हला । अलं वो अन्तेउरविरहपज्जुस्सुएण राएसिणा उवरुद्धेण ।

राजा ।

इदमनन्यपरायणमन्यथा
हृदयसंनिहिते हृदयं मम

यदि समर्थयसे मदिरेक्षणे
मदनबाणहतो ऽस्मि हतः पुनः ॥ २२ ॥

अनुसूया। महाराअ। बहुवल्लहा खु राआणो सुणीअन्ति। ता जध इअं णो पिअसही बन्धुअणसोअणीआ ण भोदि तधा करिस्ससि।

राजा। भद्रे। किं बहुना।

परिग्रहबहुत्वे ऽपि द्वे प्रतिष्ठे कुलस्य नः।
समुद्ररसना चोर्वी सखी च युवयोरियम् ॥ २३ ॥

उभे। णिव्वुदाओ म्ह। ॥ शकुन्तला हर्षं सूचयति ॥

प्रियंवदा। ॥ जनान्तिकम् ॥ अणुसूए। पेक्ख पेक्ख मेहवादाहदं विअ गिम्हे मोरिं खणे खणे पच्चाअदजीविदं पिअसहिं।

शकुन्तला। हला। मरिसावेध लोअवालं जं अम्हेहिं वीसद्धपलाविणीहिं उवआरादिक्कमेण भणिदं।

सख्यौ। ॥ सस्मितम्। जेण तं मन्तिदं सो ज्जेव मरिसावेदु। अण्णस्स को अच्चओ।

शकुन्तला। अरिहदि क्खु महाराओ इमं पच्चक्खवअणं विसोढुं। परोक्खं वा किं ण मन्तीअदि।

राजा। ॥ सस्मितम् ॥

अपराधमिमं ततः सहिष्ये
यदि रम्भोरु तवाङ्गसङ्गसृष्टे।
कुसुमास्तरणे क्लमापहं मे
सुजनत्वादनुमन्यसे ऽवकाशम् ॥ २४ ॥

प्रियंवदा। ण एत्तिकेण उण तुट्ठी भविस्सदि।

शकुन्तला। ॥ सरोषमिव ॥ विरम दुल्ललिदे। एदावत्थं गदाए वि मए कीळसि

अनुसूया । ॥ बहिर्विलोक्य ॥ पिअंवदे । एसो तवस्सिमिअपोदओ इद
तदो दिण्णदिट्ठी णूणं मादरं पब्भट्ठं अणुसरेदि । ता संजोएमि दाव णं
प्रियंवदा । हला । चवलो क्खु एसो । णं णिवारिदुं एआइणी ण
पारेसि । ता अहं पि सहाअत्तणं करइस्सं । ॥ इत्युभे प्रस्थिते ॥
शकुन्तला । इदो अण्णदो ण वो गन्तुं अणुमण्णे जदो असहाइणि म्हि
उभे । ॥ सस्मितम् ॥ तुमं दाव असहाइणी जाए पुढवीणाधो समीवे वट्टदि

॥ इति निष्क्रान्ते ॥

शकुन्तला । कधं गदाओ पिअसहीओ ।
राजा । ॥ दिशो ऽवलोक्य ॥ सुन्दरि । अलमावेगेन । नन्वयमाराधयित
जनस्ते सखीभूमौ वर्तते । तदुच्यताम् ।

किं शीकरैः क्लमविमर्दिभिरार्द्रवातं
संचालयामि नलिनीदलतालवृन्तम् ।
अङ्के निधाय चरणावुत पद्मताम्रौ
संवाहयामि करभोरु यथासुखं ते ॥ २५ ॥

शकुन्तला । ण माणणीएसुं अत्ताणअं अवराहइस्सं । ॥ अवस्थासदृशमुत्था
प्रस्थिता ॥
राजा । ॥ अवष्टभ्य ॥ सुन्दरि । अपरिनिर्वाणो दिवसः । इयं च
शरीरावस्था ।

उत्सृज्य कुसुमशयनं नलिनीदलकल्पितस्तनावरणा ।
कथमातपे गमिष्यसि परिबाधाकोमलैरङ्गैः ॥ २६ ॥ ॥ इति धारयति ॥

शकुन्तला । मुञ्च मुञ्च । ण क्खु अत्तणो पहवामि । अध वा सहीमेत्त
सरणा किं दाणिं एत्थ करइस्सं ।
राजा । धिक् । व्रीडितो ऽस्मि ।
शकुन्तला । ण क्खु अहं महाराअं भणामि । देव्वं उवालहामि ।

राजा अनुकूलकारि दैव किमुपालभ्यते

शकुन्तला। कधं दाणिं ण उवालहिस्सं जं मं अत्तणो अणीसं परः लोहावेदि।

राजा। ॥ स्वगतम् ॥

अप्यौत्सुक्ये महति दयितप्रार्थनासु प्रतीपाः
काङ्क्षन्त्यो ऽपि व्यतिकरसुखं कातराः स्वाङ्गदाने।
आबाध्यन्ते न खलु मदनेनैव लब्धान्तरत्वा -
दाबाधन्ते मनसिजमपि क्षिप्तकालाः कुमार्यः॥ २७॥

॥ शकुन्तला गच्छत्येव॥

राजा। कथमात्मनः प्रियं न करिष्ये। ॥ उपसृत्य पटान्तरमवलम्बते।

शकुन्तला। पोरव। रक्ख विणअं। इदो तदो इसीओ संचरन्ति

राजा। सुन्दरि। अलं गुरुजनाद्भयेन। न ते विदितधर्मा तत्रभवान् खेदमुपयास्यति।

गान्धर्वेण विवाहेन बह्व्यो ऽथ मुनिकन्यकाः।
श्रूयन्ते परिणीतास्ताः पितृभिश्चानुमोदिताः॥ २८॥

॥ दिशो ऽवलोक्य॥ कथं प्रकाशं निर्गतो ऽस्मि। ॥ शकुन्तलां हित्वा पुन पदैः प्रतिनिवर्तते॥

शकुन्तला। ॥ पदान्तरे प्रतिनिवृत्य साङ्गभङ्गम्॥ पोरव। अणिच्छापूरअे संभासणमेत्तएण परिचिदो अअं जणो ण विसुमरिदव्वो।

राजा। सुन्दरि।

त्वं दूरमपि गच्छन्ती हृदयं न जहासि मे।
दिनावसानच्छायेव पुरोमूलं वनस्पतेः॥ २९॥

शकुन्तला गत्वा हद्धी हद्धी इमं सुणि

मे चलणा पुरोमुहा पसरन्ति । भोदु । इमेहिं पज्जन्तकुरुव
दसरीरा पेक्खिस्सं दाव से भावाणुबन्धं । ॥ तथा कृत्वा

राजा । कथमेवं प्रिये अनुरागैकरसं मामुत्सृज्य निरपेक्षैव :

अनिर्दयोपभोग्यस्य रूपस्य मृदुनः कथम् ।
कठिनं खलु ते चेतः शिरीषस्येव बन्धनम् ॥ ३०

शकुन्तला । एदं सुणिअ णत्थि मे विहवो गच्छिदुं ।

राजा । संप्रति प्रियाशून्ये किमस्मिन्करोमि । ॥ अग्रतो ऽवलो
व्याहतं गमनम् ।

मणिबन्धनगलितमिदं संक्रान्तोशीरपरिमलं तस्याः ।
हृदयस्य निगडमिव मे मृणालवलयं स्थितं पुरतः ॥

॥ सबहुमानमादत्ते ॥

शकुन्तला । ॥ हस्तं विलोक्य ॥ अम्मो । दोब्बल्लसिढिलदाए
मुणालवलअं मए ण परिण्णादं ।

राजा । ॥ मृणालवलयमुरसि निक्षिप्य ॥ अहो स्पर्शः ।

अनेन लीलाभरणेन ते प्रिये
विहाय कान्तं भुजमत्र तिष्ठता ।
जनः समाश्वासित एष दुःखभा -
गचेतनेनापि सता न तु त्वया ॥ ३२ ॥

शकुन्तला । अदो वरं असमत्थ म्हि विलम्बिदुं । भोदु
अवदेसेण अत्ताणअं दंसइस्सं । ॥ इत्युपसर्पति ॥

राजा । ॥ दृष्ट्वा सहर्षम् ॥ अये । जीवितेश्वरी मे प्राप्ता । प
प्रसादेनोपकर्तव्यो ऽस्मि खलु दैवस्य ।

पिपासाक्षामकण्ठेन याचितं चाम्बु पक्षिणा ।
नवमेघोज्झिता चास्य धारा निपतिता मुखे ३३

शकुन्तला । ॥ राज्ञः प्रमुखे स्थित्वा ॥ अज्ज । अद्धपधे सुमि
हत्थब्भंसिणो मुणालवलअस्स किदे पडिणिउत्त म्हि ।
विअ मे हिअएण तए गहिदं ति । ता णिक्खिव एदं मा
च मुणिअणेसुं पआसइस्ससि ।

राजा । एकेनाभिसंधिना प्रत्यर्पयामि ।

शकुन्तला । केण उण ।

राजा । यदिदमहमेव यथास्थानं निवेशयामि ।

शकुन्तला । ॥ आत्मगतम् ॥ का गदी । ॥ इत्युपसर्पति ॥

राजा । इतः शिलापट्टकमेव संश्रयाव । ॥ इत्युभौ परिक्रम्योपविष्टौ

राजा । ॥ शकुन्तलाया हस्तमादाय ॥ अहो स्पर्शः ।

हरकोपाग्निदग्धस्य दैवेनामृतवर्षिणा ।
प्ररोहः संभृतो भूयः किं स्वित्कामतरोरयम् ॥ ३४

शकुन्तला । ॥ स्पर्शं रूपयित्वा ॥ तुवरदु तुवरदु अज्जउत्तो ।

राजा । ॥ सहर्षमात्मगतम् ॥ इदानीमस्मि विश्वस्तः । भर्तुराभाष
॥ प्रकाशम् ॥ सुन्दरि । नातिश्लिष्टः संधिरस्य मृणालवलयस्य
ऽभिमतमन्यथा घटयिष्यामि ।

शकुन्तला । ॥ स्मितं कृत्वा ॥ जधा दे रोअदि ।

राजा । ॥ सव्याजं विलम्ब्य प्रतिमुच्य ॥ सुन्दरि । दृश्यताम् ।

अयं स ते श्यामलतामनोहरं
विशेषशोभार्थमिवोज्झिताम्बरः ।
मृणालरूपेण नवो निशाकरः
करं समेत्योभयकोटिमाश्रितः ॥ ३५ ॥

शकुन्तला । ण दाव णं पेक्खामि । पवणुक्कम्पिणा कण्णुप्पलरे
सीकिदा मे दिट्ठी

राजा सस्मितम् यदि मन्यसे अहमना . विशदां करि

शकुन्तला । तदो अणुकम्पिदा भवे । किं उण ण दे वीससामि ।

राजा । मा मैवम् । नवो हि परिजनः सेव्यानामादेशात्परं न व

शकुन्तला । अअं जेव अब्भुवआरो अविस्सासजणओ ।

राजा । ॥ स्वगतम् ॥ नाहमेतं रमणीयं सेवावकाशमात्मनः शिथिलयि

॥ इति मुखमुन्नमयितुं प्रवृत्तः । शकुन्तला प्रतिषेधं रूपयन्ती विरमति ॥

राजा । अयि मदिरेक्षणे । अलमस्मदविनयाशङ्कया । ॥ शकुन्तला कि

हृष्टावनतमुखी तिष्ठति ॥

राजा । ॥ अङ्गुलीभ्यां मुखमुन्नमय्यात्मगतम् ॥

चारुणा स्फुरितेनायमपरिक्षतकोमलः ।

पिपासतो ममानुज्ञां ददातीव प्रियाधरः ॥ २६ ॥

शकुन्तला । पडिण्णादमन्थरो विअ अज्जउत्तो ।

राजा । सुन्दरि । कर्णोत्पलसंनिकर्षादीक्षणसादृश्यमूढो ऽस्मि । ॥ इति

मारुतेन चक्षुः सेवते ॥

शकुन्तला । भोदु । पइदित्थदंसण म्हि संवुत्ता । लज्जामि उण अणु

रिणी पिअआरिणो अज्जउत्तस्स ।

राजा । सुन्दरि । किमन्यत् ।

इदमप्युपकृतिपक्षे सुरभि मुखं ते मया यदाघ्रातम् ।

ननु कमलस्य मधुकरः संतुष्यति गन्धमात्रेण ॥ २७ ॥

शकुन्तला । असंतोसे उण किं करेदि ।

राजा । इदमिदम् । ॥ इति व्यवसितो वक्त्रं ढौकते ॥

नेपथ्ये । चक्कवाअवहु । आमन्तेहि सहअरं । उवत्थिदा रअणी ।

शकुन्तला । ॥ कर्णं दत्त्वा ससंभ्रमम् ॥ अज्जउत्त । एसा खु मम वुत्तन्

लम्भिणिं अज्जा गोदमी आअदा ता विडवन्तरिदो होहि

राजा तथा इत्येकान्ते स्थित

प्रविश्य पात्रहस्ता गौतमी । जाद । इदं सन्तिउदअं ॥ दृष्ट्वा समुत्थाप्य ॥ असुत्थ इध देवदासहाइणी चिट्ठसि ।

शकुन्तला । इदाणिं जेव पिअंवदाअणुसूआओ मालिणिं ओदिण्णाओ ।

गौतमी । ॥ शान्त्युदकेन शकुन्तलामभ्युक्ष्य ॥ जाद । णिराबाधा मे चिरं जीव । अवि लहुसंतावाइं दे अङ्गाइं । ॥ इति स्पृशति ॥

शकुन्तला । अज्जे । अत्थि विसेसो ।

गौतमी । परिणदो दिअसो । ता एहि । उडअं जेव गच्छम्ह ।

शकुन्तला । ॥ कथं चिदुत्थायात्मगतम् ॥ हिअअ । पढमं जेव सुहोवणदे मणोरधे कालहरणं करेसि । संपदं अणुभव दाव दे किदं । ॥ पदान्तरे प्रतिनिवृत्य प्रकाशम् ॥ लदाहरअ संतावहारअ । आमन्तेमि तुमं पुणोवि-परिभोअत्थं । ॥ इति निष्क्रान्ते ॥

राजा । ॥ पूर्वस्थानमुपेत्य सनिःश्वासम् ॥ अहो । विघ्नवत्यः प्रार्थितसिद्धयः ।

मुहुरङ्गुलिसंवृताधरोष्ठं प्रतिषेधाक्षरविक्लवाभिरामम् ।
मुखमंसविवर्ति पक्ष्मलाक्ष्याः कथमप्युन्नमितं न चुम्बितं तत् ॥ ३८ ॥

क्व नु खलु संप्रति गच्छामि । अथ वा इहैव प्रियापरिभुक्ते लतामण्डपे मुहूर्तं तिष्ठामि । ॥ सर्वतो विलोक्य ॥

तस्याः पुष्पमयी शरीरलुलिता शय्या शिलायामियं
कान्तो मन्मथलेख एष नलिनीपत्त्रे नखैरर्पितः ।
हस्ताद्भ्रष्टमिदं बिसाभरणमित्यासज्यमानेक्षणो
निर्गन्तुं सहसा न वेतसगृहादीशो ऽस्मि शून्यादपि ॥ ३९ ॥

॥ विचिन्त्य ॥ अहो धिक् । असम्यक् चेष्टितं प्रियां समासाद्य कालहरणं कुर्वता मया । तदिदानीं

रहः प्रत्यासत्तिं यदि सुवदना यास्यति पुन

न कालं हास्यामि ॅ ु हि विषया.

इति क्लिष्टं विघ्नेगणयति च मे मूढहृदयं

प्रियायाः प्रत्यक्षं किमपि च तथा कातरमिव ॥ ४० ॥

नेपथ्ये । भो भो राजन् ।

सायन्तने सवनकर्मणि संप्रवृत्ते

वेदीं हुताशनवतीं परितः प्रकीर्णाः ।

छायाश्चरन्ति बहुधा भयमादधानाः

संध्याभ्रकूटकपिशाः पिशिताशनानाम् ॥ ४१ ॥

राजा । ॥ आकर्ण्य सावष्टम्भम् ॥ भो भोस्तपस्विनः । मा भैष्ट । अयमहमागतो ऽस्मि ।

3॥ इति निष्क्रान्तः ॥

॥ इति शृङ्गारभोगो नाम तृतीयो ऽङ्कः ॥

ततः प्रविशतः कुसुमावचयं नाटयन्त्यौ सख्यौ

अनुसूया । पिअंवदे । जइ वि गन्धव्वेण विवाहेण णिव्वुत्तकल्लाणा पिअसही 3 सउन्तला अणुरूवभत्तुभाइणी संवुत्ता तधा वि ण मे णिव्वुदं हिअअं ।

प्रियंवदा । कधं विअ ।

अनुसूया । अज्ज सो राएसी इट्ठिपरिसमत्तीए इसीहिं पेसिदो अत्तणो 6 णअरं पविसिअ अन्तेउरिआसदसमागदो इमं जणं सुमरेदि ण व त्ति ।

प्रियंवदा । एत्थ दाव वीसत्था होहि । ण हि तादिसा आकिदिविसेसा गुणविरोहिणो होन्ति । एत्तिकं उण चिन्तणीअं । तादो तित्थजत्तादो 9 पडिणिउत्तो इमं वुत्तन्तं सुणिअ ण आणे किं पडिवज्जिस्सदि त्ति ।

अनुसूया । जधा मं पुच्छसि तधा अहिमदं तादस्स ।

प्रियंवदा । कधं विअ ।

12 अनुसूया । किं अण्णं । वरस्स अणुरूवस्स कण्णआ पडिवादणीअअ त्ति अअं दाव पढमो संकप्पो । तं जइ देव्वं जेव संपादेदि णं कदत्थो गुरुअणो ।

15 प्रियंवदा । एवं णेदं । ॥ पुष्पभाजनं विलोक्य ॥ सहि । अवचिदाइं बलि-कम्मपज्जत्ताइं क्खु कुसुमाइं ।

अनुसूया । णं सउन्तलाए वि सोहग्गदेवदाओ अच्चिदव्वाओ । ता अव-18 राइं पि अवचिणम्ह ।

प्रियंवदा । जुज्जदि । ॥ उभे तदेव कर्माभिनयतः ॥

नेपथ्ये । अयमहं भोः ।

21 अनुसूया । ॥ कर्णं दत्त्वा ॥ सहि । अदिधिणा विअ णिवेदिदं ।

प्रियंवदा । णं उडए संणिहिदा सउन्तला । ॥ विचिन्त्य ॥ आं । अज्ज

उण असणिहिदा हिअएण तेण हि भादु एत्तिकेहि कुसुमेहि प
इति प्रस्थिते ॥
पुनर्नेपथ्ये । आः । कथमतिथिं मां परिभवसि ।

विचिन्तयन्ती यमनन्यमानसा
तपोनिधिं वेत्सि न मामुपस्थितम् ।
स्मरिष्यति त्वां न स बोधितो ऽपि सन्
कथां प्रमत्तः प्रथमं कृतामिव ॥ १ ॥

॥ उभे श्रुत्वा विषण्णे ॥
प्रियंवदा । हद्धी हद्धी । तं जेव संवुत्तं । कस्सिं पि पूआरिहे
सुण्णहिअआ पिअसही ।
अनुसूया । ॥ पुरो ऽवलोक्य ॥ सहि । ण क्खु जस्सिं कस्सिं वा
दुव्वासा सुलहकोवो महेसी । तधा अअं विरलपादुद्धाराए
पडिणिउत्तो ।
प्रियंवदा । को अण्णो हुदवहादो दहिदुं पहवदि । ता गच्छ । पादेसु
णिअत्तावेहि जाव से अहं पि अग्घोदअं उवकप्पेमि ।
अनुसूया । तधा । ॥ इति निष्क्रान्ता ॥
प्रियंवदा । ॥ पदान्तरे स्खलितं रूपयन्ती ॥ अम्मो । आवेअक्खलिदा
मे अग्गहत्थादो पुप्फभाअणं । ॥ नाट्येन पुष्पावचयं विधत्ते ॥
प्रविश्य अनुसूया । सहि । सरीरी विअ कोवो कस्स सो
गेण्हदि । किं चि उण साणुकम्पो किदो ।
प्रियंवदा । एदं जेव तस्सिं बहुदरं । ता कधेहि ।
अनुसूया । जदो णिअत्तिदुं णेच्छदि तदो पादेसु पणमिअ वि
मए । भअवं । पढमभत्ति अवेक्खिअ अज्ज तुह अविण्णादप्पहावपर
दुहिदाजणस्स भअवदा अअं अवराहो मरिसिदव्वो त्ति ।

प्रियंवदा तदो तदो

अनुसूया। तदो सो ण मे वअणं अण्णधा भविदुं अरिहदि। किं दु अहिण्णाणाहरणदंसणादो से सावो णिअत्तिस्सदि त्ति मन्तअन्तो ज्जेव अन्तरिदो।

प्रियंवदा। सक्कं दाणिं अस्ससिदुं। अत्थि तेण राएसिणा संपत्थिदेण अत्तणो णामङ्किदं अङ्गुलीअअं सुमरावणीअं ति सउन्तलाहत्थे सअं ज्जेव पिणद्धाविदं। एसो ज्जेव तस्सिं साहीणो उवाओ भविस्सदि।

अनुसूया। एहि। देवकज्जं दाव से णिव्वत्तम्ह। ॥ इति परिक्रामतः ॥

प्रियंवदा। ॥ विलोक्य ॥ अनुसूए। पेक्ख दाव वामहत्थविणिहिदवअणा आलिहिदा विअ पिअसही तग्गदाए चिन्ताए अत्ताणअं पि ण विभावेदि। किं उण अदिधिविसेसं।

अनुसूया। पिअंवदे। दोण्णं जेव णो हिअए एसो वुत्तन्तो चिट्ठदु। रक्खणीआ खु पइदिपेलवा पिअसही।

प्रियंवदा। को दाव उण्होदएण णोमालिअं सिञ्चदि।

॥ इत्युभे निष्क्रान्ते ॥

33॥ प्रवेशकः ॥

॥ ततः प्रविशति सुप्तोत्थितः कण्वशिष्यः ॥

शिष्यः। वेलोपलक्षणायादिष्टो ऽस्मि प्रभासात्प्रतिनिवृत्तेन तत्रभवता कण्वेन। तत्प्रकाशं निर्गत्यावलोकयामि किमवशिष्टं रजन्या इति ॥ परिक्रम्यावलोक्य च ॥ हन्त प्रभातम्। तथा हि

यात्येकतो ऽस्तशिखरं पतिरोषधीना -

माविष्कृतो ऽरुणपुरःसर एकतो ऽर्कः।

तेजोद्वयस्य ॰ या
लोको नियम्यत इवैष दशान्तरेषु ॥ २ ॥

।

अन्तर्हिते शशिनि सैव कुमुद्वती मे
दृष्टिं न नन्दयति संस्मरणीयशोभा ।
ष्टप्रवासजनितान्यबलाजनेन
दुःखानि नूनमतिमात्रदुरुद्वानि ॥ ३ ॥

।

कर्कन्धूनामुपरि तुहिनं रञ्जयत्यग्रसंध्या
दार्भं मुञ्चत्युटजपटलं वीतनिद्रो मयूरः ।
॰दिभान्तात्खुरविलिखितादुत्थितश्चैप सद्यः
पश्चादुच्चैर्भवति हरिणः स्वाङ्गमायच्छमानः ॥ ४ ॥

।

पादन्यासं क्षितिधरगुरोर्मूर्ध्नि कृत्वा सुमेरोः
क्रान्तं येन क्षपिततमसा मध्यमं धाम विष्णोः
सो ऽयं चन्द्रः पतति गगणादल्पशेषैर्मयूखै-
रत्यारूढिर्भवति महतामप्यपभ्रंशनिष्ठा ॥ ५ ॥

॰क्षेपेण अनुसूया । ॥ स्वगतम् ॥ एवं पि णाम नि
॰दं णिवडिदं जधा तेण रण्णा सउन्तलाए अणज्जं
यावदुपस्थितां होमवेलां गुरवे निवेदयामि । ॥ इति
णं पहादा रअणी । ता लहुं पडिबुद्ध म्हि । अ॰
करइस्सं । ण मे उइदेसुं पि पहादकरणीएसुं हत्
दाणिं कामो भोदु जेण सुद्धहिअआ पिअसही अ॰
॰दा । अध वा ण तस्स रापसिणो अवगाहो

क्खु एसो पहवदि । अण्णधा कधं दाणिं सो राएसी तादिसाइं मन्तिअ एत्तिकस्स कालस्स वाआमेत्तकं पि ण विसज्जेदि । ॥ विचिन्त्य ॥ ता इदो अहिण्णाणङ्गुलीअअं से विसज्जामो त्ति । अध वा णिदुक्खसीदले तवस्सिअणे को णाम अब्भत्थीअदु । ण अ सहीगामी दोसो त्ति कदुअ ववसिदाओ वि पारेमो तादकण्णस्स दुस्सन्तपरिणीदं आवण्णसत्तं सउन्तलं णिवेदिदुं । ता एत्थ दाणिं किं णु क्खु अम्हेहिं करणीअं ।

प्रविश्य प्रियंवदा । अणुसूए । तुवर तुवर । सउन्तलाए पत्थाणकोदूहलाइं करीअन्ति ।

अनुसूया । ॥ सविस्मयम् ॥ सहि । कधं विअ ।

प्रियंवदा । सुणाहि । इदाणिं जेव सुहसुत्तिआपुच्छणणिमित्तं सउन्तलाए समीवं गद म्हि ।

अनुसूया । तदो तदो ।

प्रियंवदा । तदो जाव णं लज्जावणदमुहिं परिस्सइअ तादकण्णो एवं अहिणन्देदि । वच्छे । दिट्ठिआ धूमोवरुद्धदिट्ठिणो वि जजमाणस्स पावअस्स मुहे ज्जेव णिवडिदा आहुदी । सुसिस्सपरिग्गहिदा विअ विज्जा असोअणीआ सि मे संवुत्ता । ता अज्ज ज्जेव तुमं इसिपरिग्गहिदं कदुअ भत्तुणो सकासं विसज्जेमि त्ति ।

अनुसूया । सहि । केण उण आचक्खिदो तादकण्णस्स अअं वुत्तन्तो ।

प्रियंवदा । अग्गिसरणं पविट्ठस्स किल सरीरं विणा छन्दोवदीए वाआए ।

अनुसूया । ॥ सविस्मयम् ॥ कधं विअ ।

प्रियंवदा । सुण । ॥ संस्कृतमाश्रित्य ॥

> दुःषन्तेनाहितं तेजो दधानां भूतये भुवः ।
> अवेहि तनयां ब्रह्मन्नग्निगर्भां शमीमिव ॥ ६ ॥

अनुसूया ॥ प्रियंवदामाश्लिष्य ॥ सहि । पिअं मे पिअं । किं तु अज्ज ज्जेव

सउन्तला णीअदि त्ति उक्कण्ठासाहारणं दाणिं परिदोसं अणुभवामि ।

प्रियंवदा । अम्हे कधं पि उक्कण्ठं विणोदइस्सामो । सा दाणिं तवस्सिणी णिव्वुदा भोदु ।

अनुसूया । तेण हि एदस्सिं चूदसाहावलम्बिदे णारिएलसमुग्गए एदंणिमित्तं जेव मए कालहरणक्खमा केसरगुण्डा णिक्खित्ता चिट्ठन्ति । ते तुमं णलिणीवत्तसंगदे करेहि जाव से अहं पि गोरोअणं तित्थमट्टिअं दुव्वाकिसलआइं च मङ्गलसमालहणत्थं विरअआमि । ॥ प्रियंवदा तथा करोति । अनुसूया निष्क्रान्ता ॥

नेपथ्ये । गौतमि । आदिश्यन्तां शार्ङ्गरवशारद्वतमिश्रा वत्सां शकुन्तलां नेतुं सज्जीभवतेति ।

प्रियंवदा । ॥ कर्णं दत्त्वा ॥ अनुसूए । तुवर तुवर । एदे क्खु हत्थिणाउरगामिणो इसीओ सद्दावीअन्ति ।

प्रविश्य समालभनहस्ता अनुसूया । सहि । एहि गच्छम्ह । ॥ इति परिक्रामतः ॥

प्रियंवदा । ॥ विलोक्य ॥ एसा सुज्जोदए ज्जेव्व किदमज्जणा पडिच्छिदणीवारवाअणाहिं तावसीहिं अहिणन्दीअमाणा सउन्तला चिट्ठदि । ता उवसप्पम्ह णं । ॥ इति तथा कुरुतः ॥

18 ॥ ततः प्रविशति यथानिर्दिष्टपरिवारा शकुन्तला गौतमी च ॥

शकुन्तला । भअवदीओ वन्दामि ।

गौतमी । जादे । भत्तुणो बहुमाणसूदइत्तअं देवीसद्दं अधिगच्छ ।

तापस्यः । वच्छे । वीरप्पसविणी होहि । ॥ इति गौतमीवर्जं निष्क्रान्ताः ॥

सख्यौ । ॥ उपगम्य ॥ सहि । सुमज्जणं दे भूदं ।

शकुन्तला । साअदं पिअसहीणं । इदो णिसीदध ।

सख्यौ । उपविश्य । हला उज्जुआ दाव होहि जाव दे मङ्गलसमालहणं करेमो ।

शकुन्तला । उइदं पि एदं अज्ज बहुमण्णिदव्वं । जदो दुल्लहं दाव पुणो मे पिअसहीमण्डणं भविस्सादि । ॥ इति बाष्पं विसृजति ॥

सख्यौ । सहि । ण जुत्तं मङ्गलआले रोदिदुं । ॥ अश्रूणि परिमृज्य नाट्येन प्रसाधयतः ॥

प्रियंवदा । अहो । आहरणारिहं दे रूवं अस्समसुलहेहिं पसाहणेहिं विप्पआरीअदि ।

प्रविश्य आभरणहस्तो मुनिकुमारकः । इदमलंकारजातमलंक्रियतामायुष्मती ।

॥ सर्वा विलोक्य विस्मिताः ॥

गौतमी । वच्छ हारीद । कुदो एदं ।

हारीतः । तातकण्वप्रभावात् ।

गौतमी । किं माणसी सिद्धी ।

हारीतः । न खलु । श्रूयताम् । तत्रभवता कण्वेन वयमाज्ञापिताः शकुन्तलाहेतोर्वनस्पतिभ्यः कुसुमान्याहरतेति । ततः

क्षौमं केनचिदिन्दुपाण्डु तरुणा माङ्गल्यमाविष्कृतं
निष्ठ्यूतश्चरणोपभोगसुलभो लाक्षारसः केनचित् ।
अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितै-
र्दत्तान्याभरणानि नः किसलयच्छायाप्रतिस्पर्धिभिः ॥ ७ ॥

प्रियंवदा । ॥ शकुन्तलां विलोक्य ॥ कोडरसंभवा वि महुअरी पोक्खरमहुं जेव अहिलसदि ।

गौतमी । इमाए अब्भुववत्तीए सूइदा भत्तुणो गेहे अणुभविदव्वा राअलच्छी ।

॥ शकुन्तला लज्जां नाटयति ॥

हारीतः । यावदिमां [illegible]भिषेकार्थं मालिनीतीरमवतीर्णाय भगवते

6 कण्वाय निवेदयामि । ॥ इति निष्क्रान्तः ॥

अनुसूया । सहि । अणणुभूदभूसणो अअं जणो कधं तुमं अलंकरेदु । ॥ चिन्तयित्वा विलोक्य च ॥ चित्तपरिचएण दाणिं दे अङ्गेसुं आहरण-
9 विणिओअं करेम्ह ।

शकुन्तला । जाणामि वो णिउणत्तणं । ॥ सख्यौ नाट्येनालंकारमायुञ्जाते ॥

॥ ततः प्रविशति स्नानोत्तीर्णः कण्वः ॥

12 कण्वः ।

यास्यत्यद्य शकुन्तलेति हृदयं स्पृष्टं समुत्कण्ठया
अन्तर्बाष्पभरोपरोधि गदितं चिन्ताजडं दर्शनम् ।
वैक्लव्यं मम तावदीदृशमहो स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः ॥ ८ ॥

॥ इति परिक्रामति ॥

सख्यौ । हला सउन्तले । अवसिदमण्डणा दाणिं सि तुमं । संपदं परिधेहि
3 एदं विचित्तं खोमजुअलं । ॥ शकुन्तला उत्थाय नाट्येन परिधत्ते ॥

गौतमी । जाद । एसो दे आणन्दवाहपरिवाहिणा लोअणेण परिस्सअन्तो विअ गुरू उवत्थिदो । ता समुदाआरं पडिवज्जसु । ॥ शकुन्तला सव्रीडा
6 वन्दनां करोति ॥

कण्वः । वत्से ।

ययातेरिव शर्मिष्ठा पत्युर्बहुमता भव ।
पुत्रं त्वमपि सम्राजं सेव पूरुमवाप्नुहि ॥ ९ ॥

गौतमी । जाद । वरो क्खु एसो ण उण आसिसा ।

कण्वः । वत्से । इतः [illegible] ॥ सर्वे परिक्रामन्ति

कण्व    वत्से

अमी वेदीं परितः क्लृप्तधिष्ण्याः
समिद्वन्तः प्रान्तविस्तीर्णदर्भाः ।
अपघ्नन्तो दुरितं हव्यगन्धै-
र्वैतानास्त्वां वह्नयः पालयन्तु ॥ १० ॥

॥ शकुन्तला प्रदक्षिणं करोति ॥

कण्वः । वत्से । प्रतिष्ठस्वेदानीम् । ॥ सदृष्टिविक्षेपं ॥ क्व नु ते शाङ्गरव

प्रविश्य शिष्यौ । भगवन् । इमौ स्वः ।

कण्वः । वत्स शाङ्गरव । भगिन्याः पन्थानमादेशय ।

शिष्यः । इत इतो भवती । ॥ सर्वे परिक्रामन्ति ॥

कण्वः । भो भोः संनिहितवनदेवतास्तपोवनतरवः ।

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वसिक्तेषु य
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।
आद्ये वः कुसुमप्रवृत्तिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥

शाङ्गरवः । ॥ कोकिलशब्दं सूचयित्वा ॥ भगवन् ।

अनुमतगमना शकुन्तला सा तरुभिरियं वनवासबन्धुभि
परभृतविरुतं कलं यदासीत्प्रतिवचनीकृतमेभिरात्मनः ॥

नेपथ्ये ।

रम्यान्तरः कमलिनीहरितैः सरोभि-
श्छायाद्रुमैर्नियमितार्कमरीचितापः ।
भूयात्कुशेशयरजोमृदुरेणुरस्याः
शान्तानुकूलपवनश्च शिवश्च पन्थाः ॥ १३ ॥

सर्वे [illegible] ॥

गौतमी जाद  सि

ता पणम भअवदीण ।

शकुन्तला । ॥ सप्रणामं परिक्रम्य जनान्तिकम् ॥ पिअंवदे । अज्जउत्तदंसणुस्सुआए वि अस्समपदं परिच्चअन्तीए दुक्खदुक्खेण चलणा मे पुरोमुहा णिवडन्ति ।

प्रियंवदा । ण केवलं तुमं जेव तवोवणविरहकादरा । तए उवत्थिदविओअस्स तवोवणस्स वि अवत्थं पेक्ख दाव ।

> उग्गलिअदब्भकवला मई परिच्चत्तणच्चणा मोरी ।
> ओसरिअपण्डुवत्ता मुअन्ति अस्सूइ व लआओ ॥ १४ ॥

शकुन्तला । ॥ स्मृत्वा ॥ ताद । लदाबहिणिअं दाव माहविं आमन्तइस्सं ।

कण्वः । वत्से । अवैमि ते तस्यां सौहार्दम् । इयं सा दक्षिणे । पश्य ।

शकुन्तला । ॥ उपेत्य लतामालिङ्ग्य ॥ लदाबहिणिए । पच्चालिङ्ग मं साहामईहिं बाहाहिं । अज्ज पहुदि दूरवत्तिणी खु दे भविस्सं । ताद । अहं विअ इअं तए चिन्तणीआ ।

कण्वः । वत्से ।

> संकल्पितं प्रथममेव मया त्वदर्थे
> भर्तारमात्मसदृशं स्वगुणैर्गतासि ।
> अस्यास्तु संप्रति वरं त्वयि वीतचिन्तः
> कान्तं समीपसहकारमिमं करिष्ये ॥ १५ ॥

तदितः पन्थानं प्रतिपद्यस्व ।

शकुन्तला । ॥ सख्यावुपेत्य ॥ हला । एसा दोण्णं पि वो हत्थे णिक्खेवो ।

सख्यौ । अअं जणो कस्सिं दाणिं समप्पिदो । ॥ इति बाष्पं विसृजतः ॥

कण्वः । अनुसूये प्रियंवदे । अलं रुदितेन । ननु भवतीभ्यामेव शकुन्तला स्थिरीकर्तव्या । ॥ सर्वे परिक्रामन्ति ॥

शकुन्तला । ताद । एसा उडअपज्जन्तआरिणी गब्भहारमन्थरा मिअवहू

जदा सुहप्पसवा भव तदा मं कं पि पिअणिवेअणत्तअं
मा एदं विसुमरिस्सध ।

कण्वः । वत्से । नेदं विस्मरिष्यामि ।

शकुन्तला । ॥ गतिभेदं रूपयित्वा ॥ अम्मो । को णु क्खु एसो पदक्कन्ते
विअ मे पुणो पुणो वसणन्ते सज्जदि । ॥ परिवृत्यावलोकयति ॥

कण्वः ।

यस्य त्वया व्रणविरोहणमिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।
श्यामाकमुष्टिपरिवर्धितको जहाति
सो ऽयं न पुत्रकृतकः पदवीं मृगस्ते ॥ १६ ॥

शकुन्तला । वच्छ । किं मं सहवासपरिच्चाइणिं अणुबन्धसि । णं अचिरप्पसूदोवरदाए जणणीए विणा जधा मए वड्ढिदो सि तधा इदाणिं पि मए विरहिदं तादो तुमं चिन्तइस्सदि । ता णिअत्तसु वच्छ णिअत्तसु ।
॥ इति रुदती प्रस्थिता ॥

कण्वः । वत्से । अलं रुदितेन । स्थिरा भव । इतः पन्थानमवलोकय ।

उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं
बाष्पं कुरु स्थिरतया शिथिलानुबन्धम् ।
अस्मिन्नलक्षितनतोन्नतभूमिभागे
मार्गे पदानि खलु ते विषमीभवन्ति ॥ १७ ॥

शार्ङ्गरवः । भगवन् । उदकान्तं स्निग्धो ऽनुगम्यत इति स्मर्यताम् । तदिदं सरसीतीरम् । अत्र नः संदिश्य प्रतिगन्तुमर्हसि ।

कण्वः । तेन हीमां क्षीरवृक्षच्छायामाश्रयामः । ॥ सर्वे तथा नाटयन्ति ॥

कण्वः । किं नु खलु तत्रभवतो दुःषन्तस्य युक्तरूपं संदेष्टुम् । ॥ इति चिन्तयति ॥

अनुसूया । सहि । ण णो अस्समपदे अत्थि को वि चित्तवन्तो जो

तए विरहीअन्तो अज्ज ण ऊसुओ किदो । पेक्ख ।

गुडइणिवत्तन्तरिअं वाहरिओ णाणुवाहरेइ पिअं ।
मुहउव्वूढमुणालो तइ दिट्ठिं देइ चक्काओ ॥ १८ ॥

कण्वः । वत्स शार्ङ्गरव । इति त्वया मद्वचनात्स राजा शकुन्तल
भिधातव्यः ।

अस्मान्साधु विचिन्त्य संयमधनानुच्चैःकुलं चात्मन -
स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम्
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
दैवाधीनमतः परं न खलु तत्स्त्रीबन्धुभिर्याच्यते ॥ १

शिष्यः । भगवन् । गृहीतो ऽयं संदेशः ।

कण्वः । ॥ शकुन्तलां विलोक्य ॥ वत्से । त्वमिदानीमनुशास
ऽपि वयं लोकज्ञा एव ।

शिष्यः । भगवन् । न खलु कश्चिदविषयो नाम धीमताम् ।

कण्वः । वत्से । सा त्वमितः पतिगृहं प्राप्य

शुश्रूषस्व गुरून्कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥ २

कथं वा गौतमी मन्यते ।

गौतमी । एत्तिकं खु वहूणं उवदेसो । ॥ शकुन्तलां प्रति ॥
विसुमरिस्ससि ।

कण्वः । एहि वत्से । परिष्वजस्व मां सखीजनं च ।

शकुन्तला । ताद । इदो ज्जेव पिअसहीओ णिवत्तिस्सन्ति

कण्वः । वत्से । इमे अपि प्रदेये । तन्न युक्तमनयोस्तत्र ग

सह गौतमी गमिष्यति

शकुन्तला । ॥ पितुरङ्कमाश्लिष्य ॥ कधं दाणि तादस्स अङ्कादो परिब्भट्ठ
9 मलअपव्वदुम्मूलिदा विअ चन्दणलदा देसन्तरे जीविदं धारइस्सं
॥ इति रोदिति ॥

कण्वः । वत्से । किमेवं कातरासि ।

अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे
विभवगुरुभिः कृत्यैरस्य प्रतिक्षणमाकुला ।
तनयमचिरात्प्राचीवार्कं प्रसूय च पावनं
मम विरहजां न त्वं वत्से शुचं गणयिष्यसि ॥ २१ ॥

शकुन्तला । ॥ पादयोः पतित्वा ॥ ताद । वन्दामि ।

कण्वः । वत्से । यदहमीहे तदस्तु ते ।

3 शकुन्तला । ॥ सख्यावुपेत्य ॥ सहीओ । एध । दुवे वि मं समं जेव परिस्सअध ।

सख्यौ । ॥ तथा कृत्वा ॥ सहि । जइ कदा वि सो राएसी पच्चहिण्णाणमन्थरे
भवे तदो से अत्तणो णामधेअङ्किदं अङ्गुलीअअं दंसइस्ससि ।

शकुन्तला । इमिणा संदेहेण वो कम्पिदं मे हिअअं ।

सख्यौ । सहि । मा भाआहि । सिणेहो पावं आसङ्कदि ।

शार्ङ्गरवः । ॥ विलोक्य ॥ भगवन् । अगान्तरमधिरूढः सविता । त्वरतां
भवती ।

शकुन्तला । ॥ भूयः पितुरङ्कमाश्लिष्य ॥ ताद । कदा णु क्खु भूओ तवोवणं
पेक्खिस्सं ।

कण्वः । वत्से ।

भूत्वा चिराय सदिगन्तमहीसपत्नी
दौःषन्तिमप्रतिरथं तनयं प्रसूय ।

 सहैव भर्त्रा

शान्त्यै करिष्यसि पदं पुनराश्रमेऽस्मिन् ॥ २२ ॥

गौतमी । जाद । परिहीअदि दे गमणवेला । ता णिअत्तावेहि पिदरं । अध वा चिरेण वि एसा ण णिअत्तइस्सदि । ता णिअत्तदु भवं ।

3 कण्वः । वत्से । उपरुध्यते मे तपोवनानुष्ठानम् ।

शकुन्तला । तवोवणवावारेण णिरुक्कण्ठो तादो । अहं उण उक्कण्ठाभाइणी संवुत्ता ।

6 कण्वः । अयि । किं मामेवं जडीकरोषि । ॥ निःश्वस्य ॥

अपयास्यति मे शोकः कथं नु वत्से त्वयावचितपूर्वम् ।
उटजद्वारि विरूढं नीवारबलिं विलोकयतः ॥ २३ ॥

गच्छ । शिवास्ते सन्तु पन्थानः ।

॥ इति निष्क्रान्ताः शकुन्तलया सह गौतमीशार्ङ्गरवशारद्वतमिश्राः ॥

3 सख्यौ । ॥ चिरं विलोक्य सकरुणम् ॥ हद्धी हद्धी । अन्तरिदा सउन्तला वणराईहिं ।

कण्वः । अनुसूये प्रियंवदे । गता वां सहचरी । निगृह्य शोकावेगं मामनु-
6 गच्छतम् । ॥ सर्वे प्रस्थिताः ॥

उभे । ताद । सउन्तलाविरहिदं सुण्णं विअ तवोवणं पविसामो ।

कण्वः । स्नेहवृत्तिरेवंदर्शिनी । ॥ सविमर्शं परिक्रम्य ॥ हन्त भोः । शकुन्तलां
9 विसृज्य लब्धमिदानीं स्वास्थ्यम् । कुतः ।

अर्थो हि कन्या परकीय एव
तामद्य संप्रेष्य परिग्रहीतुः ।
जातो ऽस्मि सद्यो विशदान्तरात्मा
चिरस्य निक्षेपमिवार्पयित्वा ॥ २४ ॥

॥ इति निष्क्रान्ताः सर्वे ॥

इति शकुन्तलाप्रस्थानं नाम चतुर्थोऽङ्कः

॥ ततः प्रविशति कञ्चुकी ॥

कञ्चुकी । ॥ निःश्वस्य ॥ अहो बत । कीदृशीं वयोवस्थामापन्नो

आचार इत्यधिकृतेन मया गृहीता
या वेत्रयष्टिरवरोधगृहेषु राज्ञः ।
काले गते बहुतिथे मम सैव जाता
प्रस्थानविक्लवगतेरवलम्बनाय ॥ १ ॥

यावदभ्यन्तरगताय देवाय स्वयमनुष्ठेयमकालक्षेपार्हं निवेदयामि । ॥ स्तोकमन्तरं गत्वा ॥ किं पुनस्तत् । ॥ विचिन्त्य ॥ आम् । कण्वशिष्यास्तपस्विनो देवं द्रष्टुमिच्छन्ति । भोश्चित्रमेतत् ।

क्षणात्प्रबोधमायाति लङ्घ्यते तमसा पुनः ।
निर्वास्यतः प्रदीपस्य शिखेव जरतो मतिः ॥ २ ॥

॥ परिक्रम्य दृष्ट्वा ॥ एष देवः

प्रजाः प्रजाः स्वा इव तन्त्रयित्वा
निषेवते शान्तमना विविक्तम् ।
यूथानि संचार्य रविप्रतप्तः
शीतं दिवा स्थानमिव द्विपेन्द्रः ॥ ३ ॥

यत्सत्यं शङ्कित इवास्मीदानीमेव धर्मासनादुत्थिताय देवाय कण्व[illegible] निवेदयितुम् । अथ वा कुतो वा विश्रामो लोकपालानाम् ।

भानुः सकृद्युक्ततुरङ्ग एव
रात्रिंदिवं गन्धवहः प्रयाति ।
शेषः सदैवाहितभूमिभारः

षष्ठांशवृत्तेरपि धर्म एषः ॥ ४ ॥

॥ इति परिक्रामति ॥

॥ ततः प्रविशति राजा विदूषको विभवतश्च परीवारः ॥

3 राजा । ॥ अधिकारखेदं निरूप्य ॥ सर्वः प्रार्थितमधिगम्य सुखी संपद्यते राज्ञां तु चरितार्थतापि दुःखोत्तरैव । कुतः ।

औत्सुक्यमात्रमवसादयति प्रतिष्ठा
क्लिश्नाति लब्धपरिपालनवृत्तिरेव ।
नातिश्रमापनयनाय यथा श्रमाय
राज्यं स्वहस्तधृतदण्डमिवातपत्रम् ॥ ५ ॥

नेपथ्ये वैतालिकौ । जयति जयति देवः ।

एकः ।

स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथ वा ते सृष्टिरेवंविधैव ।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम् ॥ ६ ॥

द्वितीयः ।

नियमयसि विमार्गप्रस्थितानात्तदण्डः
प्रशमयसि विवादं कल्पसे रक्षणाय ।
अतनुषु विभवेषु ज्ञातयः सन्तु नाम
त्वयि तु परिसमाप्तं बन्धुकृत्यं जनानाम् ॥ ७ ॥

राजा । ॥ आकर्ण्य ॥ आश्चर्यम् । एतेन कार्यानुशासनपरिश्रान्ताः पुनर्नवीकृताः स्मः

3 विदूषक भो गोविन्दारओ त्ति भणिदस्स रिसभस्स परिस्सम णस्सादि ।

राजा । ॥ सस्मितम् ॥ ननु क्रियतामासनपरिग्रहः ।

6 ॥ उभावुपविष्टौ परिजनश्च यथास्थानं स्थितः । नेपथ्ये वीणाशब्दः ॥

विदूषकः । ॥ कर्णं दत्त्वा ॥ भो वअस्स । संगीदसालन्तरे कण्णं देहि । लअसुद्धाए वीणाए सरसंजोओ सुणीअदि । जाणे तत्थभोदी हंसवदी 9 वण्णपरिचअं करेदि त्ति ।

राजा । तूष्णीं भव यावदाकर्णयामि ।

कञ्चुकी । ॥ विलोक्य ॥ अये । अन्यासक्तचित्तो देवः । तदवसरं प्रति- पालयामि । ॥ इत्येकान्ते स्थितः ॥

नेपथ्ये गीयते ।

अहिणवमहुलोहभाविओ तह परिचुम्बिअ चूअमञ्जरिं ।
कमलवसइमेत्तणिव्वुओ महुअर वीसरिओ सि णं कहं ॥ ८ ॥

राजा । अहो रागपरिवाहिणी गीतिः ।

विदूषकः । भो वअस्स । किं दाव से गीदिआए गहिदो भवदा अक्खरत्थो । राजा । ॥ सस्मितम् ॥ सकृत्कृतप्रणयो ऽयं जनः । तदहं देवीं हंसवती- मन्तरेणोपालम्भमागतो ऽस्मि । सखे माधव्य । मद्वचनादुच्यतां देवी हंसवती सम्यगुपालब्धो ऽस्मीति ।

विदूषकः । जं भवं आणवेदि । उत्थाय ॥ भो वअस्स । गहिदो तए परकेरएहिं हत्थेहिं सिहण्डए अच्छभल्लो । ता अवीदराअस्स विअ समणस्स णत्थि दाणिं मे मोक्खो ।

राजा । गच्छ । नागरकवृत्त्या शान्तयैनाम् ।

विदूषक का गदी इति निष्क्रान्त

राजा । स्वगतम् । किं नु खलु [illegible] ऽपि
बलवदुत्कण्ठितो ऽस्मि । अथ वा ।

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दा-
न्पर्युत्सुको भवति यत्सुखितो ऽपि जन्तुः ।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि ॥ ९ ॥

॥ अस्मृतिनिमित्तमुन्मनस्कत्वं रूपयति ॥

कञ्चुकी । ॥ उपसृत्य ॥ जयति जयति देवः । एते खलु हिमगिरेरुपत्यकारण्यवासिनः कण्वसंदेशमादाय सस्त्रीकास्तपस्विनः प्राप्ताः । इति श्रुत्वा देवः प्रमाणम् ।

राजा । ॥ सविस्मयम् ॥ किं कण्वसंदेशहारिणः सस्त्रीकास्तपस्विनः ।

कञ्चुकी । अथ किम् ।

राजा । तेन हि विज्ञाप्यतां मद्वचनादुपाध्यायः सोमरातः । अमूनाश्रमवासिनः श्रौतेन विधिना सत्कृत्य स्वयमेव प्रवेशयितुमर्हसीति । अहमप्येतांस्तपस्विदर्शनोचिते देशे प्रतिपालयामि ।

कञ्चुकी । यथाज्ञापयसि । ॥ इति निष्क्रान्तः ॥

राजा । ॥ उत्थाय ॥ वेत्रवति । अग्निशरणमार्गमादेशय ।

प्रतीहारी । इदो इदो एदु देवो । ॥ परिक्रम्य ॥ भट्टा । एसो अहिणवसंमज्जणरमणीओ संणिहिदहोमधेणू अग्गिसरणालिन्दओ । ता आरोहदु देवो ।

राजा । ॥ साभिनयमारुह्य परिजनांसावलम्बी तिष्ठन् ॥ वेत्रवति । किमुद्दिश्य तत्रभवता कण्वेन मत्सकाशमृषयः प्रेषिताः ।

किं तावद्व्रतिनामुपोढतपसां विघ्नैस्तपो दूषितं
धर्मारण्यचरेषु केन चिदुत [illegible]म्

आहो स्वित्प्रसवो ममापचरितैर्विष्टम्भितो वीरुधा-
मित्यारूढबहुप्रतर्कमपरिच्छेदाकुलं मे मनः ॥ १० ॥

प्रतीहारी । देवस्स भुअसहणिव्वुदे अस्समे कुदो एदं । किं तु सुचरि
हिणन्दिणो इसीओ देवं सभाजइदुं आगद त्ति तक्केमि ।

॥ ततः प्रविशतो गौतमीसहितौ शकुन्तलामादाय कण्वशिष्यौ पुरतश्चैषां पुरोहितकञ्चुकि

कञ्चुकी । इत इतो भवन्तः ।

शार्ङ्गरवः । सखे शारद्वत ।

महाभागः कामं नरपतिरभिन्नस्थितिरसौ
न कश्चिद्वर्णानामपथमपकृष्टो ऽपि भजते ।
तथापीदं शश्वत्परिचितविविक्तेन मनसा
जनाकीर्णं मन्ये हुतवहपरीतं गृहमिव ॥ ११ ॥

शारद्वतः । शार्ङ्गरव । स्थाने खलु पुरप्रवेशात्तवेदृशः संवेगः । अहमपि

अभ्यक्तमिव स्नातः शुचिरशुचिमिव प्रबुद्ध इव सुप्तम् ।
बद्धमिव स्वैरगतिर्जनमवशः सङ्गिनमवैमि ॥ १२ ॥

पुरोधाः । अत एव भवद्विधा महान्तः ।

शकुन्तला । ॥ दुर्निमित्तमभिनीय ॥ अम्मो । किं ति वामेदरं णअणं
विप्फुरदि ।

गौतमी । जाद । पडिहदं अमङ्गलं । सुहाइं दे होन्तु । इति परिक्रामन्ति

पुरोधाः । ॥ राजानं निर्दिश्य ॥ भोस्तपस्विनः । असावत्र वर्णाश्रमाणां रक्षि
प्रागेव मुक्तासनः प्रतिपालयति वः । पश्यतैनम् ।

शार्ङ्गरवः । काममेतदभिनन्दनीयम् । तथापि वयमत्र मध्यस्थाः । कुत

भवन्ति ———: फलोद्गमै

घनाः

अनुद्धताः सत्पुरुषाः समृद्धिभिः

स्वभाव एवैष परोपकारिणाम् ॥ १३ ॥

प्रतीहारी। देव। पसण्णमुहा सुत्थकप्पा विअ इसीओ दीसन्ति।

राजा। ॥ शकुन्तलां निर्वर्ण्य ॥ अये।

केयमवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या।

मध्ये तपोधनानां किसलयमिव पाण्डुपत्त्राणाम् ॥ १४ ॥

प्रतीहारी। भट्टा। दंसणीआकिदी खु लक्खीअदि।

राजा। भवतु। अनिर्वर्ण्यं खलु परकलत्रम्।

शकुन्तला। ॥ उरसि हस्तं दत्त्वा। आत्मगतम् ॥ हिअअ। किं एवं

अज्जउत्तस्स भावाणुबन्धं सुमरिअ धीरत्तणं दाव अवलम्बसु।

पुरोधाः। ॥ पुरो गत्वा ॥ स्वस्ति देवाय। देव। एते खलु वि

चितास्तपस्विनः। कश्चिदेतेषूपाध्यायसंदेशः। तं देवः श्रोतुमर्हति

राजा। ॥ सादरम् ॥ अवहितो ऽस्मि।

शिष्यौ। ॥ हस्तमुद्यम्य ॥ भो राजन्। विजयतां भवान्।

राजा। ॥ सप्रणामम् ॥ सर्वानभिवादये वः।

शिष्यौ। स्वस्ति भवते।

राजा। अपि निर्विघ्नं तपः।

शिष्यौ।

कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि।

तमस्तपति घर्मांशौ कथमाविर्भविष्यति ॥ १५ ॥

राजा। ॥ आत्मगतम् ॥ सर्वथार्थवान्खलु मे राजशब्दः। ॥ प्रकाशम्

भगवान्कुशली कण्वः।

शार्ङ्गरव। राजन्। स्वाधीनकुशलाः खलु सिद्धिमन्तः। स

नामयप्रश्नपूर्वकमिदमाह

राजा । किमाज्ञापयति ।

शार्ङ्गरवः । यन्मिथःसमवायादिमां मदीयां दुहितरं भवानुपयेमे
प्रीतिमता युवयोरनुज्ञातम् । कुतः ।

त्वमर्हतां प्राग्रहरः स्मृतो ऽसि नः
शकुन्तला मूर्तिमतीव सत्क्रिया ।
समानयंस्तुल्यगुणं वधूवरं
चिरस्य वाच्यं न गतः प्रजापतिः ॥ १६ ॥

तदिदानीमापन्नसत्त्वेयं गृह्यतां सहधर्मचरणायेति ।

गौतमी । भद्दमुह । वत्तुकाम म्हि । ण मे वअणावकासो त्थि कि

राजा । आर्ये । कथ्यताम् ।

गौतमी ।

णावेक्खिओ गुरुअणो इमीअ ण तुमे वि पुच्छिआ बन्धू
एक्कक्कमेण चरिए किं भणउ एकमेक्कस्स ॥ १७ ॥

शकुन्तला । किं णु क्खु अज्जउत्तो भणिस्सदि ।

राजा । ॥ साशङ्कमाकुलमाकर्ण्य ॥ अये । किमिदमुपन्यस्तम् ।

शकुन्तला । ॥ स्वगतम् ॥ हुं । सावलेवो से वअणावक्खेवो ।

शार्ङ्गरवः । किं नाम किमिदमुपन्यस्तमिति । ननु भवानेव
लोकवृत्तान्तनिष्णातः ।

सतीमपि ज्ञातिकुलैकसंश्रयां
जनो ऽन्यथा भर्तृमतीं विशङ्कते ।
अतः समीपे परिणेतुरिष्यते
प्रियाप्रिया वा प्रमदा स्वबन्धुभिः । ॥ १८ ॥

राजा किमत्रभवती मया परिणीतपूर्वा

शकुन्तला । ॥ आत्मगतं सविषादम् ॥ हिअअ । संवुत्ता दे आसङ्का ।

शार्ङ्गरवः । राजन् । किं कृतकार्यद्वेषाद्धर्मं प्रति विमुखतोचिता राज्ञः ।

राजा । कुतो ऽयमसत्कल्पनाप्रसङ्गः ।

शार्ङ्गरवः । ॥ सक्रोधम् ॥ मूर्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तानाम् ।

राजा । विशेषेणाधिक्षिप्तो ऽस्मि ।

गौतमी । ॥ शकुन्तलां प्रति ॥ जाद । मा लज्ज । अवणइस्सं दाव अवगुण्ठणं । तदो भट्टा तुमं अहिजाणिस्सदि । ॥ इति तथा करोति ॥

राजा । ॥ शकुन्तलां निर्वर्ण्य । आत्मगतम् ॥

इदमुपनतमेवं रूपमक्लिष्टकान्ति
प्रथमपरिगृहीतं स्यान्न वेत्यध्यवस्यन् ।
भ्रमर इव निशान्ते कुन्दमन्तस्तुषारं
न खलु सपदि भोक्तुं नापि शक्नोमि मोक्तुम् ॥ १९ ॥

प्रतीहारी । ॥ स्वगतम् ॥ अहो धम्मावेक्खिदा भट्टिणो । ईदिसं णा सुहोवणदं इत्थीरदणं पेक्खिअ को अण्णो विआरेदि ।

शार्ङ्गरवः । भो राजन् । किमिदं जोषमास्यते ।

राजा । भोस्तपस्विन् । चिन्तयन्नपि न खलु स्वीकरणमत्रभवत्याः स्मरामि तत्कथमिमामभिव्यक्तसत्त्वलक्षणामात्मानं क्षेत्रियमिव मन्यमानः प्रतिपत्स्ये

शकुन्तला । ॥ स्वगतम् ॥ हद्धी हद्धी । कधं परिणए ज्जेव संदेहो । भग्ग दाणिं मे दूरारोहिणी आसालदा ।

शार्ङ्गरवः । मा तावत् ।

कृताभिमर्शामनुमन्यमानः
सुतां त्वया नाम मुनिर्विमान्यः ।
मुष्टं प्रतिग्राहयता स्वमर्थं
पात्रीकृतो दस्युरिवासि येन २०

शारद्वतः । शार्ङ्गरव । विरम त्वमिदानीम् । शकुन्तले । वक्तव्यमुक्तमस्माभिः । सो ऽयमत्रभवानेवमाह । दीयतामस्मै प्रतिवचनम् ।

शकुन्तला । ॥ स्वगतम् ॥ इमं अवत्थन्तरं गदे तादिसे अणुराए किं वा सुमराविदेण । अध वा अप्पा दाणिं मे सोअणीओ । भोदु । ववसिस्सं । ॥ प्रकाशम् ॥ अज्जउत्त । ॥ इत्यर्धोक्ते ॥ अध वा संसइदो दाणिं एसो समुदाआरो । पोरव । जुत्तं णाम तुह पुरा अस्समपदे सब्भावुत्ताणहिअअं इमं जणं तधा समअपुव्वं संभाविअ संपदं ईदिसेहिं अक्खरेहिं पच्चाचक्खिदुं ।

राजा । ॥ कर्णौ पिधाय ॥ शान्तं शान्तम् ।

व्यपदेशमाविलयितुं समीहसे मां च नाम पातयितुम् ।
कूलंकषेव सिन्धुः प्रसन्नमोघं तटतरुं च ॥ २१ ॥

शकुन्तला । भोदु । परमत्थदो जइ परपरिग्गहसङ्किणा तए एदं पउत्तं ता अहिण्णाणेण केणावि तुह संदेहं अवणइस्सं ।

राजा । प्रथमः कल्पः ।

शकुन्तला । ॥ मुद्रास्थानं परामृश्य ॥ हद्धी हद्धी । अङ्गुलीअअसुण्णा मे अङ्गुली । ॥ इति सविषादं गौतमीमीक्षते ॥

गौतमी । जाद । णं दे सक्कावदारे सचीतित्थे उदअं वन्दमाणाए पब्भट्ठं अङ्गुलीअअं ।

राजा । इदं तत्प्रत्युत्पन्नमतित्वं स्त्रीणाम् ।

शकुन्तला । एत्थ दाव विहिणा दंसिदं पहुत्तणं । अवरं दे कधइस्सं ।

राजा । श्रोतव्यमिदानीं संवृत्तम् ।

शकुन्तला । णं एक्कदिअसं वेदसलदामण्डवे णलिणीवत्तभाअणगदं उदअं तुह हत्थे संणिहिदं आसि ।

राजा । शृणुमस्तावत् ।

शकुन्तला तक्खण सो मम पुत्तकिदओ मिअसावओ उवत्थिदा तदो
15 तए अअं दाव पढमं पिवदु त्ति अणुकम्पिणा उवच्छन्दिदो । ण उण
दे अवरिचिदस्स हत्थादो उदअं उवगदो पादुं । पच्छा तस्सिं जेव्व
उदए मए गहिदे किदो तेण पणओ । एत्थन्तरे विहसिअ भणिदं तए ।
18 सव्वं सव्वो सगन्धे वीससदि जदो दुवे वि तुम्हे आरण्णआओ त्ति ।
राजा । आभिस्ताभिरात्मकार्यनिर्वर्त्तिनीभिर्मधुराभिरनृतवाग्भिराकृष्यन्ते वि-
षयिणः ।
21 गौतमी । महाराअ । णारिहसि एवं मन्तिदुं । तवोवणसंवड्ढिदो क्खु अअं
जणो अणहिण्णो केदवस्स ।
राजा । तापसवृद्धे ।

स्त्रीणामशिक्षितपटुत्वममानुषीषु
संदृश्यते किमुत याः प्रतिबोधवत्यः ।
प्रागन्तरीक्षगमनात्स्वमपत्यजात -
मन्यद्विजैः परभृताः किल पोषयन्ति ॥ २२ ॥

शकुन्तला । ॥ सरोषम् ॥ अणज्ज । अत्तणो हिअआणुमाणेण किल सव्वं
एदं पेक्खसि । को णाम अण्णो धम्मकञ्चुअववदेसिणो तणच्छण्ण-
3 कूवोवमस्स तुह अणुकारी भविस्सदि ।
राजा । ॥ स्वगतम् ॥ वनवासादविभ्रमः पुनरत्रभवत्याः कोपो लक्ष्यते ।
तथा हि

न तिर्यगवलोकितं भवति चक्षुरालोहितं
वचो ऽपि परुषाक्षरं न च पदेषु संसज्जते ।
हिमार्त इव वेपते सकल एष बिम्बाधरः
स्वभावविनते भ्रुवौ युगपदेव भेदं गते ॥ २३ ॥

अथ वा संदिग्धबुद्धिं ——————— कोपो ऽस्याः तथा ह्यनया

मय्येव

वृत्तं रहः प्रणयमप्रतिपद्यमाने ।

भेदाद्भ्रुवोः कुटिलयोरतिलोहिताक्ष्या

भग्नं शरासनमिवातिरुषा स्मरस्य ॥ २४ ॥

॥ प्रकाशम् ॥ भद्रे । प्रथितं दुःषन्तचरितं प्रजासु । नापीदं दृश्यते ।

शकुन्तला । सुट्ठु । इदाणिं अत्तच्छन्दाणुआरिणी संवुत्त म्हि जा इमस्स पुरुवंसस्स पच्चएण मुहमहुणो हिअअपत्थरस्स हत्थब्भासं उवगदा

॥ इति पटान्तेन मुखमावृत्य रोदिति ॥

शार्ङ्गरवः । इत्थमप्रतिहतं चापलं दहति ।

अतः समीक्ष्य कर्तव्यं विशेषात्संगतं रहः ।

अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम् ॥ २५ ॥

राजा । अयि भोः । किमत्रभवतीवचनसंप्रत्ययादेवास्मान्संभृतदोषैरधिक्षिप

शार्ङ्गरवः । ॥ सासूयम् ॥ श्रुतं भवद्भिरधरोत्तरम् ।

आ जन्मनः शाठ्यमशिक्षितो य-

स्तस्याप्रमाणं वचनं जनस्य ।

पराभिसंधानमधीयते यै-

र्विद्येति ते सन्ति किलाप्तवाचः ॥ २६ ॥

राजा । हंहो सत्यवादिन् । अभ्युपगतं तावदस्माभिरेवंविधा एव वयम् किं पुनरिमामभिसंधाय लभ्यते ।

शार्ङ्गरवः । विनिपातः ।

राजा । विनिपातः पौरवैर्लभ्यत इत्यश्रद्धेयमेतत् ।

शार्ङ्गरवः । भो राजन् । किमत्रोत्तरोत्तरैः । अनुष्ठितो गुरुनियोगः । संप्र निवर्तामहे वयम् ।

तदेषा भवतः पत्नी त्यज वैनां गृहाण वा

उपयन्तुर्हि दारेषु प्रभुता सर्वतोमुखी ॥ २७ ॥

गौतमि । गच्छाग्रतः । ॥ इति प्रस्थिताः ॥

शकुन्तला । अहं इमिणा दाव किदवेण विप्पलद्धा । तुम्हे वि मं परिच्चअध ।

3 ॥ इत्यनुप्रतिष्ठते ॥

गौतमी । ॥ परिवृत्यावलोक्य च ॥ वच्छ सङ्गरव । अणुगच्छदि णो करुणपरिदेविणी सउन्तला । पच्चादेसपिसुणे भत्तारे किं करेदु तवस्सिणी ।

6 शार्ङ्गरवः । ॥ सरोषं निवृत्य ॥ आः पुरोभागिनि । किमिदं स्वातन्त्र्यमवलम्बसे । ॥ शकुन्तला भीता वेपते ॥

शार्ङ्गरवः । शृणोतु भवती ।

यदि यथा वदति क्षितिपस्तथा
त्वमसि किं पितुरुत्कुलया त्वया ।
अथ तु वेत्सि शुचि व्रतमात्मनः
पतिगृहे तव दास्यमपि क्षमम् ॥ २८ ॥

तिष्ठ । साधयामो वयम् ।

राजा । भोस्तपस्विन् । किमत्रभवती विप्रलभ्यते । पश्य ।

कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव ।
वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः ॥ २९ ॥

शार्ङ्गरवः । राजन् । अथ पुनः पूर्ववृत्तं व्यासङ्गाद्विस्मृतं भवेत्तदा कथमधर्मभीरोर्दारपरित्यागः ।

3 राजा । भवन्तमेव गुरुलाघवं पृच्छामि ।

मूढः स्यामहमेषा वा वदेन्मिथ्येति संशये ।
दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांसुलः ॥ ३० ॥

पुरोधाः । ॥ विचार्य ॥ यदि तावदेवं क्रियते ।

राजा । अनुशास्तु गुरुः ।

3 पुरोधाः । अत्रभवती तावदा प्रसवादस्मद्गृहे तिष्ठतु ।

राजा । कुत इदम् ।

पुरोधाः । त्वं साधुनैमित्तिकैरादिष्टपूर्वः प्रथममेवोभयचक्रवर्तिनं पुत्रं जन-
6 यिष्यसीति । स चेन्मुनिदौहित्रस्तल्लक्षणोपपन्नो भवति ततः प्रतिनन्द्य शुद्धान्तमेनां प्रवेशयिष्यसि । विपर्यये त्वस्याः पितुः समीपगमनं स्थितमेव ।

राजा । यथा गुरुभ्यो रोचते ।

9 पुरोधाः । ॥ उत्थाय ॥ वत्से । इत इतो ऽनुगच्छ माम् ।

शकुन्तला । भअवदि वसुंधरे । देहि मे अन्तरं ।

॥ इति सह पुरोधसा तपस्विभिर्गौतम्या च रुदती प्रस्थिता । राजा शापव्यवहितस्मृतिः
12 शकुन्तलामेव चिन्तयति ॥

नेपथ्ये । आश्चर्यमाश्चर्यम् ।

राजा । ॥ कर्णं दत्त्वा ॥ किं नु खलु स्यात् ।

15 प्रविश्य पुरोधाः । ॥ सविस्मयम् ॥ देव । अद्भुतं खलु वृत्तम् ।

राजा । किमिव ।

पुरोधाः । परावृत्तेषु कण्वशिष्येषु

सा निन्दन्ती स्वानि भाग्यानि बाला
बाहूत्क्षेपं रोदितुं च प्रवृत्ता ।

राजा । किं तदानीम् ।

पुरोधाः ।

स्त्रीसंस्थानं चाप्सरस्तीर्थमारा-
त्क्षिप्त्वैवाशु ज्योतिरेनां तिरो ऽभूत् ॥ २१ ॥

॥ सर्वे विस्मयं रूपयन्ति ॥

राजा । गुरो । प्रथममेवास्माभिरेषो ऽर्थः प्रत्यादिष्टः । किं मृषा तर्केणा-
3 न्विष्यते । विश्राम्यताम् ।

पुरोधा विजयस्व इति निष्क्रान्त

राजा । वेत्रवति । पर्याकुल इवास्मि । शयनीयगृहमादेशय ।

प्रतीहारी । इदो इदो एदु देवो ।

राजा । ॥ परिक्रामन्स्वगतम् ॥

कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम् ।
बलवत्तु दूयमानं प्रत्याययतीव मां हृदयम् ॥ ३२ ॥

॥ इति निष्क्रान्ताः सर्वे ॥

॥ इति शकुन्तलाप्रत्याख्यानं नाम पञ्चमो ऽङ्कः ॥

तत प्रविशति नागरक पश्चाद्बाहुबन्ध पुरुषमादाय रक्षिणौ च

रक्षिणौ । ॥ पुरुषं ताडयित्वा ॥ हण्डे कुम्भिलआ । कधेहि कहिं तए एशे महालदणभाशुले उक्किण्णणाम×कले लाअकीए अङ्गुलीअए शमाशादिदे।

धीवरकः । ॥ भीतिनाटितकेन ॥ पशीदन्तु भावमिश्शा । ण हगे ईदिशश्श अकय्यश्श कालके ।

एकः । किं णु क्खु शोहणे बम्हणे शि त्ति कदुअ लञ्ञा दे पलिग्गहे दिण्णे ।

धीवरकः । शुणध दाव । हगे क्खु शक्कावदालब्भाशी धीवले ।

द्वितीयः । हण्डे पाडच्चला । किं तुमं अम्हेहिं यादिं वशदिं च पुश्चिदे।

नागरकः । सूअअ । कधेदु सव्वं कमेण । मा णं पडिबन्धेध ।

उभौ । यं लाउत्ते आणवेदि । लवेहि ले लवेहि ।

धीवरकः । शे हगे यालबडिशप्पहुदीहिं मश्चबन्धणोवाएहिं कुडुम्बभलणं कलेमि ।

नागरकः । ॥ प्रहस्य ॥ विसुद्धो दाणिं दे आजीवो ।

धीवरकः । भस्टके । मा एवं भण ।

शहये किल ये वि णिन्दिदे ण हु शे कम्म विवय्यणीअके ।
पशुमालिँ कलेदि दालुणं अणुकम्पामिदुले वि शोत्तिके ॥ १ ॥

नागरकः । तदो तदो ।

धीवरकः । अध एक्कदिअशं मए लोहिदमश्चके खण्डशो कप्पिदे । याव तश्श उदलब्भन्तले एदं महालदणभाशुलं अङ्गुलीअअं पेस्कामि । पश्चा इध विक्कअस्तं णं दंशअन्ते य्येव गहिदे भावमिश्शेहिं । एत्तिके दाव एदश्श आगमे । अधुणा मालेध वा कुस्टेध वा ।

6 नागरक अङ्गुरीयकमाघ्राय । आणुअ [illegible] ति णत्थि सदहो तधा अअ से विस्सगन्धो । आगमो दाणि एदस्स विमरिसिदव्वो । ता एध । राअउलं जेव गच्छम्ह ।

9 रक्षिणौ । ॥ धीवरं प्रति ॥ गश्च ले गण्ठिश्चेदआ गश्च । ॥ इति परिक्रामन्ति ॥

नागरकः । सूअअ । इध गोउरदुआरे अप्पमत्ता पडिवालेध मं जाव राअउलं पविसिअ णिक्कमामि ।

12 उभौ । पविशदु लाउत्ते शामिप्पशादस्तं ।

नागरकः । तधा । ॥ इति निष्क्रान्तः ॥

सूचकः । याणुअ । चिलाअदि लाउत्ते ।

15 जानुकः । णं अवशलोवशप्पणीआ खु लाआणो होन्ति ।

सूचकः । याणुअ । स्फुलन्ति मे अग्गहस्ता । ॥ धीवरं निर्दिश्य ॥ इमं गण्ठिश्चेदअं वावादेदुं ।

18 धीवरकः । णालिहदि भावे अकालणमालके भविदुं ।

जानुकः । ॥ विलोक्य ॥ एशे अस्माणं ईशले पत्ते गेण्हिअ लाअशाशणं । ॥ धीवरं प्रति ॥ ता शउलाणं मुहं पेस्कशि अध वा गिद्धशिआलाणं बली

21 भविश्शशि ।

प्रविश्य नागरकः । सिग्घं सिग्घं एदं । ॥ इत्यर्धोक्ते ॥

धीवरकः । हा हदे स्मि । ॥ इति विषादं नाटयति ॥

24 नागरकः । मुञ्चेध रे मुञ्चेध जालोवजीविणं । उववण्णो से किल अङ्गुलीअअस्स आगमो । अम्हसामिणा जेव मे कधिदं ।

सूचकः । यधा आणवेदि लाउत्ते । यमवशदिं गदुअ पडिणिउत्ते क्खु

27 एशे । ॥ इति धीवरं बन्धनान्मोचयति ॥

धीवरकः । ॥ नागरकं प्रणम्य ॥ भस्टके । तव केलके मम यीविदे । ॥ इति पादयोः पतति ॥

30 नागरक उत्थेहि उत्थेहि एसो भट्टिणा अङ्गुलीअअमुल्लसमिदो पारि-
दोसिओ दे पसादीकिदो । ता गेण्ह एदं । ॥ इति धीवराय कटकं प्रयच्छति ॥
धीवरकः । ॥ सहर्षं प्रतिगृह्य ॥ अणुग्गहिदे स्मि ।
33 जानुकः । एशे क्खु लञ्ञा तधा णाम अणुग्गहिदे यं शूलादो ओदालिअ
हस्तिस्कन्धं शमालोविदे ।
सूचकः । लाउत्ते । पालिदोशिए कधेदि महालिहलदणेण तेण अङ्गुलीअएण
36 शामिणो बहुमदेण होदव्वं ति ।
नागरकः । णं तस्सिं भट्टिणो महारिहरदणं ति ण परिदोसो । एत्तिकं
उण ।
39 उभौ । किं णाम ।
नागरकः । तक्केमि तस्स दंसणेण को वि हिअअट्ठिदो जणो भट्टिणा
सुमरिदो त्ति जदो तं पेक्खिअ मुहुत्तअं पइदिगम्भीरो वि पज्जुस्सुअमणो
42 आसि ।
सूचकः । तोशिदे दाणिं भस्टा लाउत्तेण ।
जानुकः । णं भणामि इमश्श मश्चलीशत्तुणो किदे त्ति । ॥ इति धीवरमसूयया
45 पश्यति ॥
धीवरकः । भस्टका । इदो अद्धं तुम्माणं पि शुलामुल्लं भोदु ।
जानुकः । धीवल । महत्तले शंपदं मे पिअवअश्शके शंवुत्ते शि । कादम्ब-
48 लीशक्खिके क्खु पढमं अम्माणं शोहिदे इश्चीअदि । ता शुण्डिकागालं येव
गश्चम्ह ।

॥ इति निष्क्रान्ताः सर्वे ॥

51 ॥ प्रवेशकः ॥

॥ ततः प्रविशत्याकाशयानेन मिश्रकेशी ॥

मिश्रकेशी । **णिव्वत्तिदं मए पज्जाअणिव्वत्तणीअं अच्छरातित्थसंणिज्झं ।**
54 **ता जाव इमस्स राएसिणो वुत्तन्तं पच्चक्खीकरइस्सं । मेणआसंबन्धेण सरीरभूदा मे सउन्तला । ताए वि संदिट्ठ म्हि ।** ॥ समन्तादवलोक्य ॥ **किं णु क्खु उवत्थिदक्खणे वि दिअसे णिरूसवारम्भं विअ राअउलं**
57 **दीसदि । अत्थि मे विहवो पणिधाणेण सव्वं जाणिदुं । किं तु सहीए आदरो मए माणइदव्वो । भोदु । इमाणं जेव उज्जाणवालिआणं पासपरिवत्तिणी भविअ तिरक्करिणीए पच्छण्णा उवलहिस्सं ।** ॥ इति नाट्ये-
60 नावतीर्य स्थिता ॥

॥ ततः प्रविशति चूताङ्कुरमवलोकयन्ती चेटी तस्याश्च पृष्ठतो ऽपरा ॥

प्रथमा ।

**आअम्बहरिअवेण्टं ऊसासिअं विअ वसन्तमासस्स ।**
**दिट्ठं चूअङ्कुरअं छणमङ्गलअं णिअच्छामि ॥ २ ॥**

द्वितीया । **परहुदिए । किं एदं एक्काइणी मन्तेसि ।**

प्रथमा । **सहि महुरिए । चूदलदिअं पेक्खिअ उम्मत्तिआ क्खु परहुदिआ**
3 **भोदि ।**

द्वितीया । ॥ सहर्षम् ॥ **कधं उवत्थिदो महुमासो ।**

प्रथमा । **महुरिए । तुहावि दाणिं एस कालो मदविब्भमुग्गीदाणं ।**

6 द्वितीया । **सहि । अवलम्बसु मं जाव अग्गपदं परिट्ठिदा भविअ इमिणा पसवेण संपादेमि कामदेवस्स वाअणं**

प्रथमा जइ एव ता ममावि अद्ध वा

द्वितीया। सहि। अभणिदे वि एवं संपज्जदि ज्जेव जदो एक्कं जे-णो एदं सरीरं। ॥ सख्यामवलम्बनं कृत्वा नाट्येन चूतप्रसवं गृहीत्वा ॥ अम्महे। अप्पबुद्धो वि चूदप्पसवो बन्धणभङ्गसुरही एस वाअदि ॥ कपोतहस्तं कृत्वा ॥ णमो भअवदो मअरद्धअस्स।

अरिहसि मे चूअङ्कुर दिण्णो कामस्स गहिअचावस्स।
सच्चविअजुअइलक्खो पञ्चब्भहिओ सरो होउं ॥ ३ ॥

॥ इति चूताङ्कुरं क्षिपति ॥

प्रविश्य कञ्चुकी। ॥ सक्रोधम् ॥ मा तावदनात्मज्ञे। देवेनैवं निषिद्धे ऽपि मधूत्सवे चूतकलिकाभङ्गमारभसे।

उभे। ॥ भीते ॥ पसीददु पसीददु अज्जो। अगहिदत्थाओ अम्हे।

कञ्चुकी। । हुम्। न खलु श्रुतं भवतीभ्यां तावद्वासन्तैस्तरुभिरपि प्रमाणीकृतं देवस्य शासनं तदाश्रयिभिश्च। तथा हि

चूतानां चिरनिर्गतापि कलिका बध्नाति न स्वं रजः
संनद्धं यदपि स्थितं कुरुवकं तत्कोरकावस्थया।
कण्ठेषु स्खलितं गते ऽपि शिशिरे पुंस्कोकिलानां रुतं
शङ्के संहरति स्मरो ऽपि चकितस्तूणार्धकृष्टं शरम् ॥ ४ ।

मिश्रकेशी। णत्थि एत्थ संदेहो। महप्पहावो क्खु एसो राएसी।

प्रथमा। अज्ज। कदि चि दिअसा मित्तावसुणा रट्ठिएण भट्टिणो पादमूलं पेसिदाणं अम्हाणं इध पमदवणे चित्तकम्मं अप्पिदुं। अदो ण सुदपुव्वो अम्हेहिं एसो वुत्तन्तो।

कञ्चुकी। तेन हि न पुनरेवं प्रवर्तितव्यम्।

उभे। कोदूहलं णो। जइ इमिणा जणेण सोदव्वं ता कधेदु अज्जो किं णिमित्तं भट्टिणा वसन्तूसवो णिसिद्धो

मिश्रकेशी। ऊसवप्पिआ राआणो होन्ति। ता गुरुणा कारणेण एत्थ
9होदव्वं।

कञ्चुकी। ॥ स्वगतम् ॥ बहुलीभूतो ऽयमर्थः किं न कथ्यते। ॥ प्रकाशम् ॥
अस्ति भवत्योः कर्णपथमागतं शकुन्तलाप्रत्यादेशकौलीनम्।

12उभे। अज्ज। सुदं रट्ठिअमुहादो अङ्गुलीअअदंसणं जाव।

कञ्चुकी। तेन हि स्वल्पं कथयितव्यम्। यदैवाङ्गुरीयकदर्शनादनुस्मृतं
देवेन सत्यमूढपूर्वा रहसि मया तत्रभवती शकुन्तला मोहात्प्रत्यादिष्टेति
15तदैव पश्चात्तापमनुगतो देवः।

रम्यं द्वेष्टि यथा पुरा प्रकृतिभिर्न प्रत्यहं सेव्यते
शय्योपान्तविवर्तनैर्विगमयत्युन्निद्र एव क्षपाः।
दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा
गोत्रेषु स्खलितस्तदा च भवति व्रीडाविलक्षश्चिरम् ॥ ५ ॥

मिश्रकेशी। पिअं मे पिअं।

कञ्चुकी। अस्मात्प्रभवतो वैमनस्यादुत्सवः प्रत्याख्यातः।

3उभे। जुज्जदि।

नेपथ्ये। एदु एदु भवं।

कञ्चुकी। ॥ कर्णं दत्त्वा ॥ अये। इत एवाभिवर्तते देवः। तद्गच्छतम्।
6स्वकर्मानुष्ठीयताम्। ॥ इत्युभे निष्क्रान्ते ॥

॥ ततः प्रविशति पश्चात्तापसदृशवेषो राजा विदूषकः प्रतीहारी च ॥

कञ्चुकी। ॥ राजानं विलोक्य ॥ अहो। सर्वास्ववस्थासु रामणीयकमाकृ-
9तिविशेषाणाम्। तथा ह्येवं वैमनस्यपरीतो ऽपि प्रियदर्शनो देवः। य एषः
प्रत्यादिष्टविशेषमण्डननिधिर्वामप्रकोष्ठे श्लथं

विभ्रत्का ... वल्य ... :

चिन्ताजागरणप्रताम्रनयनस्तेजोगुणैरात्मनः

संस्कारोल्लिखितो महामणिरिव क्षीणो ऽपि नालक्ष्यते ॥ ६ ॥

मिश्रकेशी । ॥ राजानमवलोक्य ॥ ठाणे क्खु पच्चादेसविमाणिदा वि इमस्स कारणादो सउन्तला किलम्मदि ।

राजा । ॥ ध्यानमन्दं परिक्रम्य ॥

प्रथमं सारङ्गाक्ष्या प्रियया प्रतिबोध्यमानमपि सुप्तम् ।

अनुशयदुःखायेदं हतहृदयं संप्रति विबुद्धम् ॥ ७ ॥

मिश्रकेशी । ईदिसाइं से तवस्सिणीए भाअधेआइं ।

विदूषकः । ॥ स्वगतम् ॥ भूओ वि लङ्घिदो एसो सउन्तलावादेण । ण आणे कधं चिकिच्छिदव्वो भविस्सदित्ति ।

कञ्चुकी । ॥ उपगम्य ॥ जयति जयति महाराजः । प्रत्यवेक्षिताः प्रमद-वनभूमयः । यथाकाममध्यास्तां विनोदस्थानानि देवः ।

राजा । वेत्रवति । मद्वचनादमात्यपिशुनं ब्रूहि । अद्य चिरप्रबोधान्न संभावितमस्माभिर्धर्मासनमध्यासितुम् । यत्प्रत्यवेक्षितमार्येण पौरकार्यं तत्प-त्त्रमारोप्य प्रस्थाप्यतामिति ।

प्रतीहारी । जं देवो आणवेदि । ॥ इति निष्क्रान्ता ॥

राजा । पार्वतायन । त्वमपि स्वनियोगमशून्यं कुरु ।

कञ्चुकी । तथा । ॥ इति निष्क्रान्तः ॥

विदूषकः । किदं भवदा णिम्मक्खिअं । संपदं सिसिरविच्छेदरमणीए इमस्सिं उज्जाणे अत्ताणअं विणोदेहि ।

राजा । ॥ निःश्वस्य ॥ वयस्य । रन्ध्रोपनिपातिनो ऽनर्था इति यदुच्यते तदव्यभिचारि । पश्य ।

मुनिसुताप्रणयस्मृतिरोधिना

मम च मुक्तमिदं तमसा मनः
मनसिजेन सखे प्रहरिष्यता
धनुषि चूतशरश्च निवेशितः ॥ ८ ॥

अपि च ।

उपहितस्मृतिरङ्गुलिमुद्रया
प्रियतमामनिमित्तनिराकृताम् ।
अनुशयादनुरोदिमि चोत्सुकः
सुरभिमाससुखं समुपस्थितम् ॥ ९ ॥

विदूषकः । भो वअस्स । चिट्ठ दाव जाव इमिणा दण्डअट्ठेण कन्दप्पवाणं णासेमि । ॥ इति दण्डकाष्ठमुद्यम्य चूताङ्कुरं पातयितुमिच्छति ॥

राजा । ॥ सस्मितम् ॥ भवतु । दृष्टं ब्रह्मवर्चसम् । सखे । क्वेदानीमुपविष्टः प्रियायाः किं चिदनुकारिणीषु लतासु दृष्टिं विनोदयामि ।

विदूषकः । णं भवदा आसण्णपरिचारिआ लिविअरी मेधाविणी आदिट्ठा । माहवीलदाघरए इमं वेलं अदिवाहइस्सं तहिं च मे चित्तफलए सहत्थालिहिदं तत्थभोदीए सउन्तलाए पडिकिदिं आणेसु त्ति ।

राजा । ईदृशमेव मे हृदयमत्याश्वासनम् । तत्तदेवादेशय माधवीलतागृहम् ।

विदूषकः । इदो इदो एदु भवं । ॥ इति परिक्रामतः । मिश्रकेशी अनुगच्छति ॥

विदूषकः । एस मणिसिलापट्टसणाधो माहवीलदामण्डवो विवित्तदाए णीसद्दसाअदेण विअ पडिच्छदि तुमं । ता पविसिअ उवविसम्ह । ॥ उभौ तथा कुरुतः ॥

मिश्रकेशी । लदाए अन्तरिदा पेक्खिस्सं दाव पिअसहीपडिकिदिं । तदो से भत्तुणो अणुराअं वहुमदं णिवेदइस्सं । ॥ तथा स्थिता ॥

राजा । ॥ निःश्वस्य ॥ सखे । सर्वमिदानीं स्मरामि । शकुन्तलायाः प्रथमदर्शनवृत्तान्तं कथितवानस्मि भवते । स भवान्[illegible] मत्समीपगत

एव नासीत् प्रथममपि तत्रभवत्याः कीर्तितं नाम मया कच्चिदहमिव
स्मृतवांस्त्वमपि ।

मिश्रकेशी । अदो ज्जेव महीवदीहिं खणं पि साहिआ सहाआ ण
विरहिदव्वा ।

विदूषकः । भो । ण विसुमरामि । किं तु सव्वं कधिअ तए ज्जेव
अवसाणे कधिदं । परिहासविअप्पो एसो ण भूदत्थो त्ति । मए मन्दबु-
द्धिणा तधा जेव गहिदं । अध वा भविदव्वदा एत्थ बलवदी ।

मिश्रकेशी । एवं णेदं ।

राजा । ॥ क्षणं ध्यात्वा ॥ सखे । परित्रायस्व माम् ।

विदूषकः । भो वअस्स । एदं किं उववण्णं तुह । ण कदा वि सप्पुरिसा
सोअवत्तव्वा होन्ति । णं पवादे वि णिक्कम्पा जेव गिरीओ ।

राजा । वयस्य । निराकरणविक्लवायास्ते सख्यास्तामवस्थामनुस्मृत्य बलव-
दशरणो ऽस्मि । सा हि

इतः प्रत्यादिष्टा स्वजनमनुगन्तुं व्यवसिता
स्थिता तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे ।
पुनर्दृष्टिं बाष्पप्रसरकलुषामर्पितवती
मयि क्रूरे यत्तत्सविषमिव शल्यं दहति माम् ॥ १० ॥

मिश्रकेशी । अम्महे । इमस्स ईदिसी अकज्जपरदा संतावेदि ।

विदूषकः । भो । अत्थि मे तक्को । केण वि तत्थभोदी आआससंचारिणा
णीद त्ति ।

राजा । वयस्य । कः पतिव्रतां तामन्यः परामर्ष्टुमुत्सहते । मेनका किल
सख्यास्ते जन्मप्रतिष्ठेति सखीजनादस्मि श्रुतवान् । तत्सहचरीभिस्त्वया
वा नीतेति मे हृदयमाशङ्कते ।

मिश्रकेशी । संमोहो क्खु विम्हअणीओ ण उण पडिबोधो ।

विदूषक भो जइ एव ता ... भव अत्थि क्खु समागमो
9 तत्थभोदीए ।

राजा । कथमिव ।

विदूषकः । भो । ण हि मादा पिदा वा भत्तुविरहिदं चिरं दुहिदरं
2 पेक्खिदुं पारेदि ।

राजा । वयस्य ।

स्वप्नो नु माया नु मतिभ्रमो नु
क्लृप्तं नु तावत्फलमेव पुण्यैः ।
असंनिवृत्त्यै तदतीव मन्ये
मनोरथानामतटप्रपातम् ॥ ११ ॥

विदूषकः । भो । मा एवं भण । णं अङ्गुलीअअं जेव एत्थ णिदंसणं
अवस्संभाविणो अचिन्तणीआ समागमा होन्ति त्ति ।

3 राजा । ॥ अङ्गुरीयकमालोक्य ॥ इदं तदसुलभस्थानभ्रंशि शोचनीयमङ्गुरीयकम् ।

तव सुचरितमङ्गुरीय नूनं प्रतनु ममेव विभाव्यते फलेन ।
अरुणनखमनोहरासु तस्याश्च्युतमसि लब्धपदं यदङ्गुलीषु ॥ १२ ॥

मिश्रकेशी । जइ अण्णहत्थगदं भवे तदा सच्चं सोअणीअं भवे । सहि ।
दूरे वट्टसि । एआइणी जेव कण्णसुहाइं अणुभवामि ।

3 विदूषकः । भो । इअं णाममुद्दा केण उण उग्घादेण भवदा तत्थभोदीए
हत्थसंसग्गं पाविदा ।

मिश्रकेशी । मम विअ कोदूहलेण आलाविदो एसो ।

5 राजा । वयस्य । श्रूयताम् । यदा तपोवनात्स्वनगराय प्रस्थितं मां प्रिया
सबाष्पमिदमाह कियच्चिरेणार्यपुत्रः पुनरस्माकं स्मरिष्यतीति ।

विदूषकः । तदो तदो ।

9 राजा । अथेमां नाममुद्रामङ्गुल्यां निवेशयता मया प्रत्यभिहिता ।

विदूषक    किं ति

राजा ।

एकैकमत्र दिवसे दिवसे मदीयं
नामाक्षरं गणय यासि न यावदन्तम् ।
तावत्प्रिये मदवरोधनिदेशवर्ती
नेता जनस्तव समीपमुपैष्यतीति ॥ १३ ॥

तच्च मोहाद्दारुणमनुष्ठितम् ।

मिश्रकेशी । रमणीओ क्खु अवही विहिणा विसंवादिदो ।

विदूषकः । अध कधं रोहिदमच्छस्स मुहं बडिसं विअ एदं पविट्ठं

राजा । शचीतीर्थे सलिलं वन्दमानायास्तव सख्याः परिभ्रष्टम् ।

विदूषकः । जुज्जदि ।

मिश्रकेशी । अदो क्खु तवस्सिणीए सउन्तलाए अधम्मभीरुणो र
परिणए संदेहो । अध वा ण ईदिसो अणुराओ अहिण्णाणं अ
ता कधं विअ एदं ।

राजा । भवतु । उपालप्स्ये तावदिदमङ्गुरीयकम् ।

विदूषकः । ॥ सस्मितम् ॥ अहं पि एदं दण्डअट्ठं उवालहिस्सं
उज्जुअस्स मे कुडिलं तुमं सि त्ति ।

राजा । ॥ अनाकर्णितनाटितकेन ॥

कथं नु तं कोमलबन्धुराङ्गुलिं
करं विहायासि निमग्नमम्भसि ।

अथ वा

अचेतनं नाम गुणं न वीक्षते
मयैव कस्मादवधीरिता प्रिया ॥ १४ ॥

मिश्रकेशी । सअं जेव पडिवण्णो जं म्हि वत्तुकामा ।

विदूषकः । भो । सव्वधा अहं खु बुभुक्खाए मारिदव्वो ।

3 राजा । ॥ अनादृत्य ॥ प्रिये । अकारणपरित्यागानुशयदग्धहृदयस्तावदनु-
कम्प्यतामयं जनः पुनर्दर्शनेन ।

प्रविश्य चित्रफलकहस्ता चेटी । भट्टा । इअं चित्तगदा भट्टिणी । ॥ इति
6 चित्रफलकं दर्शयति ॥

राजा । ॥ विलोक्य ॥ अहो रूपमालेख्यस्य । तथा हि

दीर्घापाङ्गविसारिनेत्रयुगलं लीलाञ्चितभ्रूलतं
दन्तान्तःपरिकीर्णहासकिरणज्योत्स्नाभिषिक्ताधरम् ।
कर्कन्धूद्युतिपाटलोष्ठरुचिरं तस्यास्तदेतन्मुखं
चित्रे ऽप्यालपतीव विभ्रमलसत्प्रोद्भिन्नकान्तिद्रवम् ॥ १५ ॥

विदूषकः । ॥ विलोक्य ॥ भो । भावमहुरा रेहा । खलदि विअ मे दिट्ठी
णिण्णुण्णदप्पदेसेसुं । किं बहुणा । सत्ताणुप्पवेससङ्काए आलवणकोदूहलं
3 मे जणेदि ।

मिश्रकेशी । अहो राएसिणो वत्तिआरेहाणिउणदा । जाणे पिअसही मे
अग्गदो वट्टदि त्ति ।

6 राजा । वयस्य ।

यद्यत्साधु न चित्रे ऽस्मिन्क्रियते तत्तदन्यथा ।
तथापि तस्या लावण्यं रेखया किं चिदन्वितम् ॥ १६ ॥

मिश्रकेशी । सरिसं पच्छादावगुरुणो सिणेहस्स ।

राजा । ॥ निःश्वस्य ॥

साक्षात्प्रियामुपगतामपहाय पूर्वं
चित्रार्पितामहमिमां बहु मन्यमानः ।
स्रोतोवहां पथि निकामजलामतीत्य
जातः सखे [illegible] ॥ १७ ॥

विदूषक तिण्णि आइदीओ दीसन्ति सव्वाओ ज्जेव दंसणीआओ ता कदमा तत्थभोदी सउन्तला ।

मिश्रकेशी । अणहिण्णो एस तवस्सी सहीए रूवस्स । मोहचक्खुणो इअं ण गदा से पच्चक्खदं ।

राजा । त्वं तावत्कतमां तर्कयसि ।

विदूषकः । ॥ निर्वर्ण्य ॥ तक्केमि जा एसा अवसेअसिणिद्धपल्लवं असोअलदिं संसिदा सिढिलकेसबन्धुव्वम्मन्तकुसुमेण बद्धसेदबिन्दुणा वअणेण विसेसणमिदसाहाहिं बाहालदिआहिं ऊसासिदणीविणा वसणेण ईसिपरिस्सन्त विअ आलिहिदा सा तत्थभोदी सउन्तला सेसाओ सहीओ त्ति ।

राजा । निपुणो भवान् । अस्त्यत्र ममापि भावचिह्नम् ।

स्विन्नाङ्गुलीनिवेशाद्रेखा प्रान्तेषु दृश्यते मलिना ।
अश्रु च कपोलपतितं लक्ष्यमिदं वर्णकोच्छ्वासात् ॥ १८ ॥

चतुरिके । अर्धलिखितमेतद्विनोदस्थानमस्माभिः । तद्गच्छ । वर्तिकास्तावदानय ।

चेटी । अज्ज माधव्व । अवलम्बसु चित्तफलअं जाव गच्छामि ।

राजा । अहमेवैनमवलम्बे । ॥ इति यथोक्तं करोति । चेटी निष्क्रान्ता ॥

विदूषकः । भो । किं एत्थ अवरं आलिहिदव्वं ।

मिश्रकेशी । जो जो पिअसहीए अहिमदो पदेसो तं तं आलिहिदुकामो त्ति तक्केमि ।

राजा । सखे । श्रूयताम् ।

कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी
पादास्तामभितो निषण्णचमरा गौरीगुरोः पावनाः ।
शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम् ॥ १९ ॥

विदूषकः । ॥ अपवार्य ॥ जधा मन्तेदि तधा तक्केमि पूरिदो अणेण

चित्तफलओ आउदीहिं कुच्चाणठाण तावसाण त्ति

3 राजा । अन्यच्च शकुन्तलायाः प्रसाधनमभिमतमत्रालिखितुं विस्मृतमस्माभिः ।

विदूषकः । किं विअ ।

मिश्रकेशी । वणवासस्स कण्णआभावस्स च सरिसं भविस्सदि ।

6 राजा ।

कृतं न कर्णार्पितबन्धनं सखे
शिरीषमागण्डविलम्बिकेसरम् ।
न वा शरच्चन्द्रमरीचिकोमलं
मृणालसूत्रं रचितं स्तनान्तरे ॥ २० ॥

विदूषकः । किं णु क्खु तत्थभोदी रत्तकुवलअसोहिणा अग्गहत्थेण मुहं ओवारिअ चकिदचकिदा विअ ठिदा । ॥ दृष्ट्वा ॥ आं । एसो दासीए-
3 पुत्तो कुसुमरसपाडच्चरो धिट्ठमहुअरो तत्थभोदीए वअणकमलं अहिलसदि ।

राजा । ननु वार्यतामेष धृष्टः ।

विदूषकः । तुमं जेव अविणीदसासणे पहवसि ।

6 राजा । युज्यते । अयि भोः कुसुमलताप्रियातिथे । किमितः परिपतनखेदमनुभवसि ।

एषा कुसुमनिषण्णा तृषितापि सती भवन्तमनुरक्ता ।
प्रतिपालयति भ्रमरी न खलु मधु त्वां विना पिबति ॥ २१ ॥

मिश्रकेशी । अहिजादं क्खु वारिदो ।

विदूषकः । पडिसिद्धवामा क्खु एसा जादी ।

3 राजा । ॥ सकोपम् ॥ भोः । न मे शासने तिष्ठसि । श्रूयतां तर्हि संप्रति ।

अक्लिष्टबालतरुपल्लवलोभनीयं
पीतं मया सदयमेव रतोत्सवेषु ।
दशसि चेद्भ्रमर प्रियाया

स्त्वा कारयामि कमलोदरबन्धनस्थम् २२

विदूषकः । भो । एव तिक्खदण्डस्स दे कध ण भाइस्सदि । ॥
एसो दाव उम्मत्तओ अहं पि एदस्स सङ्गेण ईदिसो ज
राजा । कथं निवार्यमाणो ऽपि स्थित एव ।
मिश्रकेशी । धीरं पि जणं रसो विआरेदि ।
विदूषकः । ॥ प्रकाशम् ॥ भो । चित्तं खु एदं ।
राजा । कथं चित्रम् ।
मिश्रकेशी । अहं पि दाणिं जेव अवगदत्था किं उण जधाचि
एसो ।
राजा । किमिदमनुष्ठितं पौरोभाग्यम् ।

दर्शनसुखमनुभवतः साक्षादिव तन्मयेन हृदयेन ।
स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता ॥

॥ इति बाष्पं विसृजति ॥
मिश्रकेशी । अम्मो । पुव्वावरविरुद्धो एसो विरहिणो मग्गो ।
राजा । वयस्य । कथमविश्रामं दुःखमनुभवामि ।

प्रजागरात्खिलीभूतस्तस्याः स्वप्नसमागमः ।
बाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥ २४ ॥

मिश्रकेशी । सव्वधा बअस्स संमज्जिदं तए पच्चादेसदुक्ख
सउन्तलाए पच्चक्खं जेव सहीअणस्स ।
प्रविश्य चतुरिका । भट्टा । वत्तिआकरण्डअं गेण्हिअ इदो
म्हि ।
राजा । किं ततः ।
चेटी । सो मे पिङ्गलिआदुदिआए देवीए वसुमदीए अहं जेव

२ ति भणिअ गहिदो

विदूषकः । तुम कध विमुक्का ।

चेटी । जाव लदाविडवलग्गं देवीए परिचारिआ अञ्चलं मोआवेदि ताव णिण्हुविदो मए अप्पा ।

नेपथ्ये । एदु एदु भट्टिणी ।

विदूषकः । ॥ कर्णं दत्त्वा ॥ भो अहिधावन्ती एसा अन्तेउरवग्घी मेधाविणिं मइं विअ कवलिदुं उवत्थिदा ।

राजा । वयस्य । उपस्थिता देवी बहुमानगर्विता । तद्भवानिमां प्रतिकृतिं रक्षतु ।

विदूषकः । अत्ताणअं पि किं ति ण भणासि । ॥ चित्रफलकमादाय उत्थाय च ॥ जइ भवं अन्तेउरकाउरादो मुञ्चिस्सदि तदो मं मेहच्छण्णप्पासादे सद्दावेसि । एदं च तहिं गोवेमि जहिं पारावदं उज्झिअ ण को वि अण्णो पेक्खदि ।

॥ इति द्रुतपदं निष्क्रान्तः ॥

मिश्रकेशी । अम्मो । अण्णसंकन्तहिअओ वि पढमसंभावणं रक्खदि । थिरसोहिदो दाव एसो ।

प्रविश्य पत्रहस्ता प्रतीहारी । जअदु जअदु देवो ।

राजा । वेत्रवति । न खल्वन्तरे दृष्टा त्वया देवी वसुमती ।

प्रतीहारी । देव । दिट्ठा । पत्तहत्थं मं पेक्खिअ पडिणिउत्ता ।

राजा । कालज्ञा देवी कार्योपरोधं मे परिहरति ।

प्रतीहारी । देव । अमच्चो विण्णवेदि । अत्थजादस्स बहुलदाए एक्कं मए पोरकज्जं पच्चवेक्खिदं । तं देवो पत्तारोविदं पच्चक्खीकरेदु त्ति ।

राजा । इतः पत्त्रं दर्शय । प्रतीहारी तथा करोति ॥

राजा । ॥ वाचयति ॥ विदितमस्तु देवपादानाम् । धनवृद्धिनामा वणिग्वारिपथोपजीवी नौव्यसनेन विपन्नः । स चानपत्यस्तस्यानेककोटिसंख्यं वसु । तदिदानीं राजार्थतामापद्यते इति श्रुत्वा देवः ——— ।

राजा सविषादम् कष्ट खल्वनपत्यता वेत्रवति महाधनत्वाद्बहु
3 [illegible] भवितव्यम् । तदन्विष्यतां यदि का चिदापन्नसत्त्वा तस्य
भार्या स्यात् ।

प्रतीहारी । इदाणिं जेव साकेदअपुरस्स सेट्ठिणो दुहिदा णिव्वुत्तपुंसवणा
तस्स जाआ सुणीअदि ।

राजा । ननु स गर्भः पित्र्यमृक्थमर्हति । गत्वैवममात्यं ब्रूहि ।

प्रतीहारी । जं देवो आणवेदि । ॥ इति प्रस्थिता ॥

राजा । एहि तावत् ।

प्रतीहारी । ॥ निवृत्य ॥ एस म्हि ।

राजा । अथ वा किमनेन संततिरस्ति नास्ति वा ।

> येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना ।
> स स पापादृते तासां दुःषन्त इति घुष्यताम् ॥ २५ ॥

प्रतीहारी । इदं णाम घोसइदव्वं । ॥ निष्क्रम्य पुनः प्रविश्य ॥ देव । काले पवुट्ठं विअ सासणं अहिणान्दिदं महाजणेण देवस्स ।

राजा । ॥ दीर्घं निःश्वस्य ॥ एवं भोः संततिविच्छेदनिरवलम्बना मूलपुरुषावसाने संपदः परमुपतिष्ठन्ते । ममाप्यन्ते पुरुवंशश्रिय एष वृत्तान्तः ।

प्रतीहारी । पडिहदं अमङ्गलं ।

राजा । धिङ्मामुपनतश्रेयोवमानिनम् ।

मिश्रकेशी । असंसअं पिअसहिं जेव हिअए कदुअ णिन्दिदो अणेण अप्पा भविस्सादि ।

राजा ।

> संरोपितेऽप्यात्मनि धर्मपत्नी
> त्यक्ता मया नाम कुलप्रतिष्ठा ।
> कल्पिष्यमाणा महते फलाय

मिश्रकेशी । अपरिच्चत्ता दाणिं दे भविस्सदि ।

चेटी । ॥ जनान्तिकम् ॥ अज्जे । एदं पत्तं पेसअन्तेण दिउणाणुदा

3 भट्टा अमच्चेण । ता मेहच्छण्णावट्टिदं संतावणिव्वावइत्तअं अज

गेण्हिअ आअच्छ ।

प्रतीहारी । सुट्ठु दे भणिदं । ॥ इति निष्कान्ता ॥

6 राजा । अहो । दुःषन्तस्य संशयमारूढाः पिण्डभाजः ।

अस्मात्परं बत यथास्मृति संभृतानि
को नः कुले निवपनानि करिष्यतीति ।
नूनं प्रसूतिविकलेन मया प्रसिक्तं
धौताश्रुसेकमुदकं पितरः पिबन्ति ॥ २७ ॥

मिश्रकेशी । सदि क्खु दीवे ववधाणदोसेण अन्धआरं अणुभवदि ।

चेटी । भट्टा । अलं संताविदेण । वअत्थो ज्जेव पहू अवरासु

अणुरूवपुत्तजम्मेण पुव्वपुरिसाणं अरिणो भविस्सदि । ॥ आत्म

ण मे वअणं पडिच्छदि भट्टा । अध वा अणुरूवं जेव ओसधं

णिअत्तेदि ।

राजा । ॥ शोकनाटितकेन ॥ सर्वथा

आमूलशुद्धसंतति कुलमेतत्पौरवं प्रजावन्ध्ये ।
मय्यस्तमितमनार्ये देश इव सरस्वतीस्रोतः ॥ २८ ॥

॥ इति मोहमुपागतः ॥

चेटी । ॥ ससंभ्रमम् ॥ समस्ससदु समस्ससदु भट्टा ।

मिश्रकेशी । किं इदाणिं जेव णं णिव्वुदं करइस्सं । अध वा स

सउन्तलं संभावअन्तीए देवजणणीए मुहादो जण्णभाअसमूस

देवदाओ ज्जेव तधा करइस्सन्ति जधा सो भत्ता सुमं अइरेण ध

न्दिस्सदि त्ति । ता ण जुत्तं मम एत्थ विलम्बिदुं । जाव
। पिअसहिं सउन्तलं समस्ससेमि । ॥ इत्युद्भ्रान्तकेन नि
भो । अब्बम्हण्णं अब्बम्हण्णं ।
॥ प्रत्यागतचेतनः कर्णं दत्त्वा ॥ अये । माधव्यस्येवार्तनादः
भट्टा । मा णाम सो माधव्वतवस्सी पिङ्गलिआमि
लअहत्थो पाविदो भविस्सदि ।
चतुरिके । गच्छ । मद्वचनादनिषिद्धपरिजनां देवीमुपालभस्
जं देवो आणवेदि । ॥ इति निष्क्रान्ता ॥
। भो । अब्बम्हण्णं अब्बम्हण्णं ।
परमार्थतो भीतिभिन्नस्वरो ब्राह्मणः । कः को ऽत्र भोः
कञ्चुकी । आज्ञापयतु देवः ।
निरूप्यतां किमेवं माधव्यमाणवकः क्रन्दतीति ।
। यावदालोकयामि । ॥ इति निष्क्रम्य ससंभ्रमं पुनः प्रविष्ट
पार्वतायन । न खलु किं चिदत्याहितम् ।
। एवम् ।
तत्कुतो ऽयं वेपथुः । तथा हि

प्रागेव जरसा कम्पः सविशेषेण संप्रति ।
आविष्करोति सर्वाङ्गमश्वत्थमिव मारुतः ॥ २९ ॥

। परित्रायतां सुहृदं महाराजः ।
कस्मात्परित्रातव्यः ।
। महतः कृच्छ्रात् ।
अयि । भिन्नार्थमभिधीयताम् ।
। यो ऽसौ दिगवलोकनप्रासादो मे[illegible]ओ नाम ।
किं तत्र ।

कञ्चुकी ।

तस्याग्रभागादुहनीलकण्ठै -
रनेकविश्रामविलङ्घ्यशृङ्गात् ।
सखा भकाशेतरमूर्तिना ते
केनापि सत्त्वेन निगृह्य नीतः ॥ ३० ॥

राजा । ॥ सहसोत्थाय ॥ आः । ममापि सत्त्वैरभिभूयन्ते गृहाः । अथ वा बहुमत्यवायं नृपत्वम् ।

अहन्यहन्यात्मन एव ताव -
ज्ज्ञातुं भमादस्खलितं न शक्यम् ।
भजासु कः केन पथा भयाती -
त्यशेषतः कस्य पुनः भभुत्वम् ॥ ३१ ॥

नेपथ्ये । अविद अविद भो ।

राजा । ॥ आकर्ण्य गतिभेदं रूपयन् ॥ सखे । न भेतव्यं न भेतव्यम् ।

3 नेपथ्ये । भो । कधं ण भाइस्सं । एसो मं को वि पच्छामोडिअ सिरोधरं इक्खुं विअ भग्गगण्ठिं करिदुं इच्छदि ।

राजा । ॥ सदृष्टिविक्षेपम् ॥ धनुर्धनुस्तावत् ।

6 भविश्य धनुर्हस्ता यवनी । भट्टा । एदं ससरं सरासणं हत्थावाओ अ ।

॥ राजा सशरं धनुरादत्ते ॥

नेपथ्ये ।

एष त्वामभिनवकण्ठशोणितार्थी
शार्दूलः पशुमिव हन्मि चेष्टमानम् ।
आर्तानां भयमपनेतुमात्तधन्वा
दुःषन्तस्तव शरणं भवत्विदानीम् ॥ ३२ ॥

राजा । ॥ सक्रोधम् ॥ कथं मामेवोद्दिशति । आः । तिष्ठ तिष्ठ कौणपापसद ।

**अयमिदानीं न भवसि** चापमारोप्य **पार्वतायन**

3 कञ्चुकी । **इत इतो देवः ।** ॥ सर्वे सत्वरमुपसर्पन्ति ॥

राजा । ॥ समन्तादवलोक्य ॥ **अये । शून्यमिदम् ।**

नेपथ्ये । **परित्ताहि परित्ताहि । अहं भवन्तं पेक्खामि तुमं ण मं पेक्खसि ।**

6 **मज्जारगहिदो विअ उन्दुरो णिरासो म्हि जीविदे ।**

राजा । **भोस्तिरस्करिणीगर्वित । किं मदीयमस्त्रमपि त्वां न पश्यति । स्थिरो भव । मा च ते वयस्यसंपर्काद्विश्वासो भूत् । एष तमिषुं संदधे**

> **यो हनिष्यति वध्यं त्वां रक्ष्यं रक्षिष्यति द्विजम् ।**
> **हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः ॥ ३३ ॥**

॥ इति शस्त्रं संधत्ते ॥

॥ ततः प्रविशति मातलिर्विदूषकश्च ॥

3 मातलिः । **आयुष्मन् ।**

> **कृताः शरव्यं हरिणा तवासुराः**
> **शरासनं तेषु विकृष्यतामिदम् ।**
> **प्रसादसौम्यानि सतां सुहृज्जने**
> **पतन्ति चक्षूंषि न दारुणाः शराः ॥ ३४ ॥**

राजा । ॥ ससंभ्रममस्त्रमुपसंहरन् ॥ **अये । कथं मातलिः । स्वागतं देवराजसारथे ।**

3 विदूषकः । **भो । मणं म्हि इमिणा अहं पसुमारणेण मारिदुं ण पारिदो । भवं उण इमं साअदेण अहिणन्ददि ।**

मातलिः । ॥ सस्मितम् ॥ **आयुष्मन् । श्रूयतां यदर्थमस्मि हरिणा त्वत्सकाशं**

6 **प्रेषितः ।**

राजा अवहितो ऽस्मि

मातलिः । अस्ति कालनेमिप्रसूतो दुर्जयो नाम दानवगणः ।

राजा । श्रुतपूर्वो मया नारदात् ।

मातलिः ।

सख्युस्ते स किल शतक्रतोरबध्य -
स्तस्य त्वं रणशिरसि स्मृतो निहन्ता ।
उच्छेत्तुं प्रभवति यन्न सप्तसप्ति -
स्तन्नैशं तिमिरमपाकरोति चन्द्रः ॥ ३५ ॥

स भवानात्तचाप एवेदानीं देवरथमारुह्य विजयाय प्रतिष्ठताम् ।

राजा । अनुगृहीतो ऽस्म्यनया मघवतः संभावनया । अथ भवन्तं प्रति किमेवं प्रयुक्तम् ।

मातलिः । एतदपि कथ्यते । किंनिमित्तादपि मनस्तापादायुष्मान्दृष्टः । पश्चात्कोपयितुमायुष्मन्तं तथा कृतवानस्मि । कुतः ।

ज्वलति चलितेन्धनो ऽग्निर्विप्रकृतः पन्नगः फणां कुरुते ।
तेजस्वी संक्षोभात्प्रायः प्रतिपद्यते तेजः ॥ ३६ ॥

राजा । वयस्य । अनतिक्रमणीया दिवस्पतेराज्ञा । तद्गच्छ । परिगतार्थं मद्वचनादमात्यपिशुनं ब्रूहि ।

त्वन्मतिः केवला तावत्परिपालयतु प्रजाः ।
अधिज्यमिदमन्यस्मिन्कर्मणि व्यापृतं धनुः ॥ ३७ ॥

विदूषकः । जं भवं आणवेदि । ॥ इति निष्क्रान्तः ॥

मातलिः । रथमारोहत्वायुष्मान् । ॥ राजा तथा करोति ॥

3 ॥ इति निष्क्रान्ताः सर्वे ॥

॥ इति शकुन्तलाविरहो नाम षष्ठो ऽङ्कः ॥

तत                ८      रथारूढो राजा मातलिश्च

राजा । मातले । अनुष्ठितनिदेशो ऽपि मघवतः सत्क्रियाविशे-
मिवात्मानं समर्थये ।

मातलिः । आयुष्मन् । उभयत्राप्यसंतोषमवगच्छ । कुतः ।

उपकृत्य हरेस्तथा भवाँल्लघु सत्कारमवेक्ष्य मन्यते ।
गणयत्यवदानसंमितां भवतः सो ऽपि न सत्क्रियामिमा-

राजा । मा मैवम् । स खलु मनोरथानामप्यतिदूरवर्ती वि-
सत्कारः । मम हि दिवौकसां समक्षमर्धासनोपविष्टस्य

अन्तर्गतप्रार्थनमान्तिकस्थं
जयन्तमुद्वीक्ष्य कृतस्मितेन ।
आमृज्य वक्षो हरिचन्दनाङ्कं
मन्दारमाला हरिणा पिनद्धा ॥ २ ॥

मातलिः । किमिव सुरेश्वरादायुष्मान्नार्हति । पश्य ।

सुखपरस्य हरेरुभयैः कृतं
त्रिदिवमुद्धृतदानवकण्टकम् ।
तव शरैरधुना नतपर्वभिः
पुरुषकेसरिणश्च पुरा नखैः ॥ ३ ॥

राजा । अत्र खलु शतक्रतोरेव महिमा । पश्य ।

सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
संभावनागुणमवेहि तमीश्वराणाम् ।
किं वाभविष्यदरुणस्तमसां वधाय
तं चेत्सहस्रकिरणो धुरि नाकरिष्यत् ॥ ४ ॥

मातलि सदृशं तवैतत् स्तोकमन्तर गत्वा आयुष्मन् इतः पश्य नाकपृष्ठप्रस्थितस्य सौभाग्यमात्मयशसः ।

विच्छित्तिशेषैः सुरसुन्दरीणां
वर्णैरमी कल्पलतान्तरेषु ।
संचिन्त्य गीतिक्षममर्थतत्त्वं
दिवौकसस्त्वच्चरितं लिखन्ति ॥ ५ ॥

राजा । मातले । असुरसंप्रहारोत्सुकेन पूर्वेद्युरधिरोहता न लक्षितो ऽयं प्रदेशो मया । तत्कतमस्मिन्पथि वर्तामहे मरुताम् ।

3 मातलिः ।

त्रिस्रोतसं वहति यो गगनप्रतिष्ठां
ज्योतींषि वर्तयति चक्रविभक्तरश्मिः ।
तस्य व्यपेतरजसः प्रवहस्य वायो -
र्मार्गो द्वितीयहरिविक्रमपूत एषः ॥ ६ ॥

राजा । अतः खलु मे सबाह्यकरणो ऽन्तरात्मा प्रसीदति । ॥ रथाङ्गमवलोक्य ॥ शङ्के मेघपदवीमवतीर्णाः स्मः ।

3 मातलिः । आयुष्मन् । कथमवगम्यते ।

राजा ।

अयमरविवरेभ्यश्चातकैर्निष्पतद्भि -
र्हरिभिरचिरभासां तेजसा चानुलिप्तैः ।
गतमुपरि घनानां वारिगर्भोदराणां
पिशुनयति रथस्ते शीकरक्लिन्ननेमिः ॥ ७ ॥

मातलिः । अथ किम् । अन्यच्च । क्षणादूर्ध्वमायुष्मानात्माधिकारभूमौ वर्तिष्यते ।

3 राजा ॥ अधो ऽवलोक्य ॥ मातले ... संपद्यते

मनुष्यलोकः । तथा हि

शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी
पर्णाभ्यन्तरलीनतां विजहति स्कन्धोदयात्पादपाः ।
संधानं तनुभावनष्टसलिलव्यक्त्या व्रजन्त्यापगाः
केनाप्युत्क्षिपतेव पश्य भुवनं मत्पार्श्वमानीयते ॥ ८ ॥

मातलिः । आयुष्मन् । साधु दृष्टम् । ॥ सबहुमानमवलोक्य ॥ अहो । उदग्ररमणीया पृथ्वी ।

राजा । मातले । कतमो ऽयं पूर्वापरसमुद्रावगाढः कनकरसनिष्यन्दी सांध्य इव मेघः सानुमानवलोक्यते ।

मातलिः । आयुष्मन् । एष खलु हेमकूटो नाम किंपुरुषपर्वतः परं तपस्विनां सिद्धिक्षेत्रम् । पश्य ।

स्वायंभुवान्मरीचेर्यः प्रबभूव प्रजापतिः ।
सुरासुरगुरुः सो ऽस्मिन्सपत्नीकस्तपस्यति ॥ ९ ॥

राजा । ॥ सादरम् ॥ तेन ह्यनतिक्रमणीयानि श्रेयांसि । प्रदक्षिणीकृत्य भगवन्तं गन्तुमिच्छामि ।

मातलिः । आयुष्मन् । प्रथमः कल्पः । ॥ रथावतरणं नाटयित्वा ॥ एतावव-तीर्णौ स्वः ।

राजा । ॥ सविस्मयम् ॥ मातले ।

उपोढशब्दा न रथाङ्गनेमयः
प्रवर्तमानं न च दृश्यते रजः ।
अभूतलस्पर्शतया निरुद्धति-
स्तवावतीर्णो ऽपि न लक्ष्यते रथः ॥ १० ॥

मातलिः । एतावानेवायुष्मतः शतक्रतोश्च रथस्य विशेषः ।

राजा । कतमस्मिन्प्रदेशे मारीचाश्रमः ।

मातलि हस्तेन दर्शयन् पश्य

वल्मीकार्धनिमग्नमूर्तिरुरगत्वग्ब्रह्मसूत्रान्तरः
कण्ठे जीर्णलताप्रतानवलयेनात्यन्तसंपीडितः ।
अंसव्यापि शकुन्तनीडनिचितं बिभ्रज्जटामण्डलं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः ॥ ११ ॥

राजा । ॥ विलोक्य ॥ नमो ऽस्मै कष्टतपसे ।

मातलिः । ॥ संयतप्रग्रहं रथं कृत्वा ॥ एतावदितिपरिवर्धितमन्दारवृक्षकं प्रजापतेराश्रमपदं प्रविष्टौ स्वः ।

राजा । अहो । स्वर्गादिदमधिकतरं निर्वृतिस्थानम् । अमृतह्रदमिवावगाढो ऽस्मि ।

मातलिः । ॥ रथं स्थापयित्वा ॥ अवतरत्वायुष्मान् ।

राजा । ॥ साभिनयमवतीर्य ॥ भवान्कथमिदानीम् ।

मातलिः । समययन्त्रित एवायमास्ते रथः । तद्वयमप्यवतरामः । ॥ तथा कृत्वा ॥ आयुष्मन् । इतो दृश्यन्तामत्रभवतां सिद्धमुनीनां तपोवनभूमयः ।

राजा । ननु विस्मयादुभयमप्यवलोकयामि ।

प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने
तोये काञ्चनपद्मरेणुकपिशे पुण्याभिषेकक्रिया ।
ध्यानं रत्नशिलागृहेषु विबुधस्त्रीसंनिधौ संयमो
यद्वाञ्छन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ॥ १२ ॥

मातलिः । उत्सर्पिणी खलु महतां प्रार्थना । ॥ परिक्रम्याकाशे ॥ वृद्धशाकल्य किंव्यापारो भगवान्मारीचः । ॥ आकर्ण्य ॥ किं ब्रवीषि । एष दाक्षायण्या पतिव्रतापुण्यमधिकृत्य पृष्टस्तदस्यै कथयतीति । प्रतिपाल्यावसरः खलु प्रस्तावः । ॥ राजानमवलोक्य ॥ अस्यामशोकच्छायायामास्तामायुष्मान्यावत्त्वामहमिन्द्रगुरवे निवेदयामि ।

राजा यथा भवान्मन्यते इति निष्क्रान्तो मातलि

राजा । ॥ निमित्तं सूचयित्वा ॥

मनोरथाय नाशंसे किं बाहो स्पन्दसे मुधा ।
पूर्वावधीरितं श्रेयो दुःखं हि परिवर्तते ॥ १३ ॥

नेपथ्ये । मा खु मा खु चवलत्तणं करेहि । जहिं तहिं जेव अत्तणो पइदिं दंसेसि ।

राजा । ॥ कर्णं दत्त्वा ॥ अभूमिरियमविनयस्य । तत्को नु खल्वेवं निषिध्यते । ॥ शब्दानुसारेणावलोक्य सविस्मयम् ॥ अये । अयमनुरुध्यमानस्तापसीभ्याम-बालसत्त्वो बालः

अर्धपीतस्तनं मातुरामर्दक्लिष्टकेसरम् ।
विलम्बिनं सिंहशिशुं करेणाहत्य कर्षति ॥ १४ ॥

॥ ततः प्रविशति यथानिर्दिष्टो बालस्तापस्यौ च ॥

बालः । यिम्भ ले शिंहशावआ यिम्भ । दन्ताइं दे गणइश्शं ।

प्रथमा । अविणीद । किं ति णो अपच्चणिव्विसेसाइं सत्ताइं विप्पकरेसि । संपहरदि विअ दे संरम्भो । ठाणे क्खु मुणिअणेण सव्वदमणो त्ति किदणामधेओ सि ।

राजा । किं नु खलु बाले ऽस्मिन्नौरस इव पुत्रे स्निह्यति मे हृदयम् । ॥ विचिन्त्य ॥ आम् । नूनमनपत्यता मां वत्सलयति ।

द्वितीया । एसा तुमं केसरिणी लङ्घेदि जइ से पुत्तअं ण मुञ्चेसि ।

बालः । ॥ सस्मितम् ॥ अम्मो । बलिअं खु भीदे स्मि । ॥ इत्यधरं दशति ॥

राजा । ॥ सविस्मयम् ॥

महतस्तेजसो बीजं बालो ऽयं प्रतिभाति मे ।

स्फुलिङ्गावस्थया वह्निरेधःक्षय इव स्थितः १५

प्रथमा । वच्छ । मुञ्च इमं बालमइन्दअं । अण्णं दे कीळण

बालः । कहिं शे । देहि मे । ॥ इति हस्तं प्रसारयति ॥

राजा । ॥ हस्तं विलोक्य ॥ कथं चक्रवर्तिलक्षणमनेन धार्यते

प्रलोभ्यवस्तुप्रणयप्रसारितो

विभाति जालग्रथिताङ्गुलिः करः ।

अलक्ष्यपत्त्रान्तरमिद्धरागया

नवोषसा भिन्नमिवैकपङ्कजम् ॥ १६ ॥

द्वितीया । सुव्वदे । ण एसो सक्को वाआमेत्तकेण समइदुं ।

मम केरए उडए मङ्कणअस्स इसिकुमारअस्स केरओ व

मट्टिआमोरो चिट्ठदि । तं से उवहर ।

प्रथमा । तधा । ॥ इति निष्क्रान्ता ॥

बालः । ताव इमिणा येव कीळिश्शं ।

तापसी । ॥ विलोक्य हसन्ती ॥ मुञ्च णं ।

राजा । स्पृहयामि खलु दुर्ललितायास्मै । ॥ निःश्वस्य ॥

आलक्ष्यदन्तमुकुलाननिमित्तहासै -

रव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।

अङ्काश्रयप्रणयिनस्तनयान्वहन्तो

धन्यास्तदङ्गरजसा परुषीभवन्ति ॥ १७ ॥

तापसी । ॥ साङ्गुलितर्जनम् ॥ भो । ण मं गणेसि । ॥ पार्श्वमवलो

एत्थ इसिकुमारआणं मज्झे । ॥ राजानं दृष्ट्वा ॥ भद्दमुह । एहि

दाव इमिणा दुम्मोअहत्थग्गहेण डिम्भएण बाधीअमाणं बाल

राजा । तथा । ॥ इत्युपगम्य सस्मितम् ॥ अयि भो महर्षिपुत्र

एवमाश्रमविरुद्धवृत्तिना

संयमी किमिति
सत्त्वसंश्रयसुखो ऽपि दूष्यते
कृष्णसर्पशिशुनेव चन्दनः ॥ १८ ॥

तापसी । भद्दमुह । ण क्खु एसो इसिकुमारओ ।

राजा । आकारसदृशं चेष्टितमेवास्य कथयति । स्थानप्रत्ययात्तु वयमतर्किणः ।

॥ यथाभ्यर्थितमनुतिष्ठन्बालकस्य स्पर्शमनुभूयात्मगतम् ॥

अनेन कस्यापि कुलाङ्कुरेण
स्पृष्टेषु गात्रेषु सुखं ममैवम् ।
कां निर्वृतिं चेतसि तस्य कुर्या -
द्यस्यायमङ्गात्कृतिनः प्रसूतः ॥ १९ ॥

तापसी । ॥ उभौ विलोक्य ॥ अच्छरीअं अच्छरीअं ।

राजा । आर्ये । किमिव ।

तापसी । इमस्स बालअस्स असंबद्धे वि भद्दमुहे संवादिणी आकिदि त्ति विम्हिद म्हि । अवि अ वामसीलो वि भविअ अवरिचिदस्स ण दे पडिलोमो संवुत्तो ।

राजा । ॥ बालकमुल्लापयन् ॥ आर्ये । न चेन्मुनिकुमारको ऽयं तत्को ऽस्य व्यपदेशः ।

तापसी । पोरवो त्ति ।

राजा । ॥ स्वगतम् ॥ कथमेकान्वयो ऽयमस्माकम् । अतः खलु संभाव्यते । ॥ प्रकाशम् ॥ अस्त्येतत्कुलव्रतं पौरवाणाम् ।

भवनेषु सुधासितेषु पूर्वं क्षितिरक्षार्थमुशन्ति ये निवासम् ।
विहितैकयतिव्रतानि पश्चात्तरुमूलानि गृहीभवन्ति तेषाम् ॥ २० ॥

कथं पुनरात्मगत्या मानुषाणामेष विषयः ।

तापसी जधा भद्दमुहो भणादि ——— उण इमस्स बालअस्स

जणणी देवगुरुणो तवोवणे पसूदा

राजा । ॥ आत्मगतम् ॥ हन्त । द्वितीयमिदमाश्वासजननम् ॥ प्रकाशम् ॥ अथ सा तत्रभवती किमाख्यस्य राजर्षेः पत्नी ।

तापसी । को तस्स धम्मदारपरिच्चाइणो णामं कित्तइस्सदि ।

राजा । ॥ स्वगतम् ॥ कथमियं कथा मामेव लक्षीकरोति । यदि तावदस्य शिशोर्नामतो मातरं पृच्छेयम् । ॥ विचिन्त्य ॥ अथ वा अनार्यः परदारव्यवहारः ।

प्रविश्य मृन्मयमयूरहस्ता तापसी । सव्वदमण । पेक्ख सउन्तलावण्णं ।

बालः । ॥ सदृष्टिविक्षेपम् ॥ कहिं शा मे अय्युआ । ॥ उभे प्रहासिते ॥

प्रथमा । णामसारिस्सेण उवच्छन्दिदो मादिवच्छलो ।

द्वितीया । इमस्स मोरस्स रमणीअत्तणं पेक्ख त्ति भणिदो सि ।

राजा । ॥ स्वगतम् ॥ कथं शकुन्तलेत्यस्य मातुराख्या । अथ वा सन्ति पुनर्नामसादृश्यानि । अपि नाम मृगतृष्णिकेव नायमन्ते प्रस्तावो विषादाय कल्पेत ।

बालः । अन्तिके । लोअदि मे चडुलके एशे मऊलके । ॥ इति क्रीडनकमादत्ते ॥

प्रथमा । ॥ विलोक्य सावेगम् ॥ अम्मो । रक्खागण्डओ से मणिबन्धे ण दीसदि ।

राजा । आर्ये । अलमावेगेन । नन्वयमस्य सिंहशावकविमर्दात्परिभ्रष्टः । ॥ इत्यादातुमिच्छति ॥

उभे । मा खु मा खु । ॥ विलोक्य ॥ कधं गहिदं जेव ।

॥ उभे विस्मयादुरसि निहितहस्ते परस्परमालोकयतः ॥

राजा । किमर्थं भवतीभ्यां प्रतिषिद्धो ऽस्मि ।

प्रथमा । सुणादु महाभाओ । महप्पहावा एसा अवराइदा णाम सुरमहोसही इमस्स दारअस्स जादकम्मसमए भअवदा मारीचेण दिण्णा

27 एदं किल मादापिदरे अत्ताणअं च वज्जिअ अवरो भूमिपडिदं ण गेण्हदि ।

राजा । अथ गृह्णाति ।

30 प्रथमा । तदा सप्पो भविअ तं दंसदि ।

राजा । अथात्रभवतीभ्यां कदा चिदन्यत्र प्रत्यक्षीकृतमिदम् ।

उभे । अणेअसो ।

33 राजा । ॥ सहर्षम् ॥ तत्किं खल्विदानीं पूर्णमात्मनो मनोरथं नाभिनन्दामि ।

॥ इति बालकं परिष्वजते ॥

द्वितीया । सुव्वदे । एहि । इमं वुत्तन्तं णिअमव्वाउलाए सउन्तलाए गदुअ

36 णिवेदेम्ह । ॥ इति निष्क्रान्ते ॥

बालः । मुञ्च मं । अय्युआशआशं गमिश्शं ।

राजा । पुत्रक । मयैव सह मातरमभिनन्दयिष्यसि ।

39 बालः । दुश्शन्ते मम तादे ण क्खु तुमं ।

राजा । ॥ सस्मितम् ॥ एष विवाद एव मां प्रत्याययति ।

॥ ततः प्रविशत्येकवेणीधरा शकुन्तला ॥

42 शकुन्तला । ॥ सवितर्कम् ॥ विआरकाले वि पइदित्थं सव्वदमणस्स ओसहिं सुणिअ ण मे आसङ्को अत्तणो भाअधेएसुं । अध वा जधा मिस्सकेसीए मे आचक्खिदं तधा संभावीअदि एदं । ॥ इति परिक्रामति ॥

45 राजा । ॥ शकुन्तलां दृष्ट्वा सहर्षखेदम् ॥ अये । इयमत्रभवती शकुन्तला

वसने परिधूसरे वसाना नियमक्षाममुखी धृतैकवेणिः ।
अतिनिष्करुणस्य शुद्धशीला मम दीर्घं विरहव्रतं बिभर्ति ॥ २१ ॥

शकुन्तला । " पश्चात्तापविवर्णं राजानमवेक्ष्य सवितर्कम् " ण क्खु अज्जउत्तो

अअं। ता को णु क्खु एसो किदरक्खामङ्गलं मे दारअं गत्तसङ्गेण
3 दूसेदि।

बालः। ॥ मातरमुपगम्य ॥ अय्युए। एशे के वि पलकेलए मं पुत्तके
त्ति आलवेदि।

6 राजा। प्रिये। क्रौर्यमपि मे त्वयि प्रयुक्तमनुकूलपरिणामं संवृत्तम्।
तदहमिदानीं त्वया प्रत्यभिज्ञातमात्मानमिच्छामि।

शकुन्तला। ॥ स्वगतम् ॥ हिअअ। समस्सस समस्सस। पहरिअ णिव्वु-
9 त्तमच्छरेण अणुकम्पिद म्हि देव्वेण। अज्जउत्तो ज्जेव एसो।

राजा।

स्मृतिभिन्नमोहतमसो दिष्ट्या प्रमुखे स्थितासि मे सुमुखि।
उपरागान्ते शशिनः समुपगता रोहिणी योगम् ॥ २२ ॥

शकुन्तला। जअदु जअदु ॥ इत्यर्धोक्ते बाष्पकण्ठी विरमति ॥

राजा ॥ प्रिये।

बाष्पेन प्रतिषिद्धे ऽपि जयशब्दे जितं मया।
यत्ते दृष्टमसंस्कारपाटलौष्ठमिदं मुखम् ॥ २३ ॥

बालः। अय्युए। के एशे।

शकुन्तला। वच्छ। भाअधेआइं पुच्छ। ॥ इति रोदिति ॥

3 राजा।

सुतनु हृदयात्प्रत्यादेशव्यलीकमपैतु ते
किमपि मनसः संमोहो मे तदा बलवानभूत्।
प्रबलतमसामेवंप्रायाः शुभेष्वपि वृत्तयः
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया ॥ २४ ॥

॥ इति पादयोः पतति ॥

शकुन्तला। उत्थेदु उत्थेदु अज्जउत्तो। णूणं मम सुहप्पडिबन्धअं पुराकिदं

तेसु दिअसेसु परिणामसुहं आसि जेण साणुक्कोसो वि अज्जउत्ते तधा संवुत्तो । ॥ राजा उत्तिष्ठति ॥

शकुन्तला । अध कधं अज्जउत्तेण सुमरिदो अअं दुक्खभाई जणो ।

राजा । उद्धृतविषादशल्यः कथयामि ।

> मोहान्मया सुतनु पूर्वमुपेक्षितस्ते
> यो बाष्पबिन्दुरधरं परिबाधमानः ।
> तं तावदाकुटिलपक्ष्मविलग्नमद्य
> कान्ते प्रमृज्य विगतानुशयो भवामि ॥ २५ ॥

॥ इति यथोक्तमनुतिष्ठति ॥

शकुन्तला । ॥ प्रमृष्टबाष्पाङ्गुलीयकं विलोक्य ॥ अज्जउत्त । तं इदं अङ्गुलीअअं ।

राजा । अथ किम् । अस्मादद्भुतोपलम्भान्मया स्मृतिरुपलब्धा ।

शकुन्तला । संपादिदं खु अणेण जं तधा अज्जउत्तस्स पच्चअकारणं दुल्लहं मे आसि ।

राजा । तेन ऋतुसमागमाशंसि प्रतिपद्यतां लता कुसुमम् ।

शकुन्तला । ण से विस्ससामि । अज्जउत्तो ज्जेव णं धारेदु ।

प्रविश्य मातलिः । दिष्ट्या धर्मपत्नीसमागमेन पुत्रमुखसंदर्शनेन चायुष्मान्वर्धते ।

राजा । सुहृत्संपादितत्वात्साधुतरफलो मे मनोरथः । मातले । न खलु विदितो ऽयमाखण्डलस्यार्थः ।

मातलिः । ॥ सस्मितम् ॥ किमीश्वराणां परोक्षम् । एहि । भगवान्मारीचस्ते दर्शनमिच्छति ।

राजा । प्रिये । अवलम्ब्यतां पुत्रः । त्वामेव पुरस्कृत्य भगवन्तं द्रष्टुमिच्छामि ।

शकुन्तला । लज्जामि क्खु अज्जउत्तेण सद्धं गुरुअणसमीवं गन्तुं ।

आचरितमेतदभ्युदयकालेषु । तदेहि तावत् । ॥ इति प

18 ॥ ततः प्रविशत्यदित्या सहासनोपविष्टो मारीचः ॥

। ॥ राजानमवलोक्य ॥ दाक्षायणि ।

पुत्रस्य ते रणशिरस्ययमग्रयायी
दुःषन्त इत्यभिहितो भुवनस्य भर्ता ।
चापेन यस्य विनिवर्तितकर्म जातं
तत्कोटिमत्कुलिशमाभरणं मघोनः ॥ २६ ॥

। संभावणीअप्पहावा खु से आकिदी ।

। भूपते । एतौ पुत्रप्रीतिपिशुनेन चक्षुषा दिवौकसां
.वावलोकयतः । तदुपसर्प ।

मातले ।

प्राहुर्द्वादशधा स्थितस्य मुनयो यत्तेजसः कारणं
भर्तारं भुवनत्रयस्य सुषुवे यद्यज्ञभागेश्वरम् ।
यस्मिन्नात्मभुवः परो ऽपि पुरुषश्चक्रे भवायास्पदं
द्वन्द्वं दक्षमरीचिसंभवमिदं तत्स्रष्टुरेकान्तरम् ॥ २७ ॥

। अथ किम् ।

॥ प्रणिपत्य ॥ उभाभ्यामपि वां वासवनियोज्यो दुःषन्तः

। वत्स । चिरं पृथिवीं पालय ।

। जाद । अप्पदिरधो होहि । शकुन्तला पुत्रसहिता पादय
वत्से ।

आखण्डलसमो भर्ता जयन्तप्रतिमः सुतः ।
आशीरन्या न ते योज्या पौलोमीमङ्गला भव ॥ २८

जाद भत्तुणो बहुमदा होहि अअं च दीहाऊ उहअपक्ख
। ता एध । उवविसध । सर्वे उपविशन्ति ॥

॥ एकैकं निर्दिशन् ॥

दिष्ट्या शकुन्तला साध्वी सदपत्यमिदं भवान् ।
श्रद्धा वित्तं विधिश्चेति त्रितयं तत्समागतम् ॥ २९ ॥

भगवन् । प्रागभिप्रेतसिद्धिः पश्चाद्दर्शनमित्यपूर्वः खलु वो ऽनुग्रहः ।

भगवान् ।

उदेति पूर्वं कुसुमं ततः फलं
घनोदयः प्राक्तदनन्तरं पयः ।
निमित्तनैमित्तिकयोरयं विधि -
स्तव प्रसादस्य पुरस्तु संपदः ॥ ३० ॥

। आयुष्मन् । एवं विश्वगुरवः प्रसीदन्ति ।

भगवन् । इमामाज्ञाकरीं वो गान्धर्वेण विधिनोपयम्य कस
स्य बन्धुभिरानीतां स्मृतिशैथिल्यात्प्रत्यादिशन्नपराद्धो ऽस्मि तत्र-
युष्मद्गोत्रस्य कण्वस्य । पश्चादेनामङ्गुरीयकदर्शनादूढपूर्वामवगतो
तच्चित्रमिव मे प्रतिभाति ।

यथा गजे साधुसमक्षरूपे
कस्मिन्नपि क्रामति संशयः स्यात् ।
पदानि दृष्ट्वाथ भवेत्प्रतीति -
स्तथाविधो मे मनसो विकारः ॥ ३१ ॥

। वत्स । अलमात्मापराधशङ्कया । संमोहो ऽपि त्वय्युपपन्न एव
।

अवहितो ऽस्मि ।

। यदैवाप्सरस्तीर्थावतरणात्प्रत्यक्षवैक्लव्यां शकुन्तलामादा

दाक्षायणीमुपगता मेनका तदैव ध्यानादवगतवृत्तान्तो ऽस्मि दुर्वाससः शापादियं तपस्विनी सहधर्मचारिणा प्रत्यादिष्टेति । स चाङ्गुरीयकदर्शनावसानः शापः ।

राजा । ॥ सोच्छ्वासमात्मगतम् ॥ एष वचनीयान्मुक्तो ऽस्मि ।

शकुन्तला । ॥ स्वगतम् ॥ दिट्ठिआ । अकामपच्चादेसी अज्जउत्तो । ण उण सच्चं मं सुमरेदि । अध वा ण सुदो भवे अअं सुण्णहिअआए मए सावो जदो सहीहिं अच्चादरेण संदिट्ठं भत्तुणो अङ्गुलीअअं दंसेसि त्ति ।

मारीचः । वत्से । विदितार्थासि । तदिदानीं सहधर्मचारिणं प्रति न त्वया मन्युः करणीयः । पश्य ।

शापादसि प्रतिहता स्मृतिलोपरूक्षे
भर्तर्यपेततमसि प्रभुता तवैव ।
छाया न मूर्च्छति मलोपहतप्रसादे
शुद्धे तु दर्पणतले सुलभावकाशा ॥ ३२ ॥

राजा । यथाह भगवान् ।

मारीचः । वत्स । कच्चिदभिनन्दितस्त्वया विधिवदस्माभिरनुष्ठितजातकर्मादिक्रियः पुत्र एष शाकुन्तलेयः ।

राजा । भगवन् । अत्र खलु मे वंशप्रतिष्ठा ।

मारीचः । तथा शौर्यस्वभावेन चक्रवर्तिनमेनमवगच्छतु भवान् । पश्य ।

रथेनानुद्धातस्तिमितगतिनोत्तीर्णजलधिः
पुरा सप्तद्वीपामवति वसुधामप्रतिरथः ।
इहायं सत्त्वानां प्रसभदमनात्सर्वदमनः
पुनर्यास्यत्याख्यां भरत इति लोकस्य भरणात् ॥ ३३ ॥

राजा । भगवत्कृतसंस्कारे ऽस्मिन्सर्वमाशंसे ।

अदिति । इमाए दुहिदिआए मणोरधसंपत्तीए कण्णो वि दाव विण्णादत्थो

करीअदु मेणआ उण इध म परिअरन्ती सणिहिदा जेव चिट्ठदि

शकुन्तला । ॥ स्वगतम् ॥ मम मणोरधो वाहरिदो भअवदीए ।

मारीचः । तपःप्रभावात्सर्वमिदं प्रत्यक्षं तत्रभवतः कण्वस्य । ॥ विचिन्त्य
तथाप्यसौ दुहितुः सपुत्रायाः पत्या परिग्रहात्प्रियमस्माभिः श्रावयितव्यः
कः को ऽत्र भोः ।

प्रविश्य शिष्यः । भगवन् । अयमस्मि ।

मारीचः । गालव । मद्वचनादिदानीमेव विहायसा गत्वा तत्रभवते कण्वा
प्रियमावेदय यथा पुत्रवती शकुन्तला दुर्वाससः शापनिवृत्तौ स्मृतिमत
दुःषन्तेन गृहीतेति ।

शिष्यः । यथाज्ञापयति भगवान् । ॥ इति निष्क्रान्तः ॥

मारीचः । ॥ राजानं प्रति ॥ वत्स । त्वमपि सापत्यदारः सख्युराखण्डलस
रथमास्थाय स्वां राजधानीं प्रतिष्ठस्व ।

राजा । यथाज्ञापयति भगवान् ।

मारीचः । संप्रति हि

तव भवतु बिडोजाः प्राज्यवृष्टिः प्रजासु
त्वमपि विततयज्ञो वज्रिणं प्रीणयालम् ।
युगशतपरिवृत्तैरेवमन्योन्यकृत्यै -
र्नयतमुभयलोकानुग्रहश्लाघनीयौ ॥ ३४ ॥

राजा । भगवन् । यथाशक्ति श्रेयसि प्रयतिष्ये ।

मारीचः । वत्स । किं ते भूयः प्रियमुपकरोमि ।

राजा । भगवन् । अतः परमपि प्रियमस्ति । तथाप्येतदस्तु ।

प्रवर्ततां प्रकृतिहिताय पार्थिवः
सरस्वती श्रुतिमहतां महीयताम् ।

ममापि च क्षपयतु नीललोहितः
पुनर्भवं परिगतशक्तिरात्मभूः ॥ ३५ ॥

॥ इति निष्क्रान्ताः सर्वे ॥

॥ इति सप्तमो ऽङ्कः ॥

## ABBREVIATIONS

C. = Candraśekhara, as given in edition I, pages 173–210
H. = Hemacandra's Grammatik der Prâkritsprachen, ed. R. Pischel, Halle, 1877. 1880.
Gr. = Grammatik der Prakritsprachen von R. Pischel, Strassburg, 1900.

## ACT I.

1. 3 आर्य ॥ इयम् । अस्मि ॥ आज्ञापयतु । आर्यः । कः । नियोगः । अनुष्ठीयताम्[1] । इति ।

1. 8 सुविहितप्रयोगतया । आर्यस्य । न । किम् । अपि । परिहास्यते ।

2. 1 एवम् । नु-एतत्[2] ॥ अनन्तरकरणीयम् । इदानीम् । आज्ञापयतु । आर्यः ।

2. 4 अथ । कतरम् । पुनः । ऋतुम् । समाश्रित्य[3] । गास्यामि ।

4. a क्षणचुम्बितानि । भ्रमरैः । ऊहत । सुकुमारकेसरशिखानि ।

4 b अवतंसयन्ति । सदयम् । शिरीषकुसुमानि । प्रमदाः ।

4. 3 ननु । प्रथमम् । एव । आर्येण । आज्ञप्तम् । अभिज्ञानशकुन्तलम् । नाम । अपूर्वम् । नाटकम् । अभिनीयताम् । इति ।

15. 1 इतः । इतः । प्रियसख्यौ ।

16. 3 सखि[4] । शकुन्तले ॥ त्वत्तः । अपि । तातकण्वस्य । आश्रमवृक्षकाः । प्रियाः । इति । तर्कयामि । येन । नवमालिकाकुसुमपरिपेलवा । अपि । त्वम् । एतेषु । आलवालपूरणेषु । नियुक्ता ।

16 6 सखि । अनुसूये ॥ न । केवलम् । तातस्य । नियोगः । ममापि । सहोदरस्नेहः । एतेषु ।

16 8 सखि । शकुन्तले ॥ उदकम् । लम्भिताः । एते । ग्रीष्मकालकुसुमदायिनः । आश्रम-वृक्षकाः ॥ इदानीम् । अतिक्रान्तकुसुमसमयान् । अपि । वृक्षकान् । सिञ्चाम ॥ तेन । हि ।

---

[1] Cp. Gr. § 216; 483. – [2] Cp. Gr. § 174. – [3] Orig. समाश्रयिय; cp. Gr § 590 – [4] Cp H II. 195· Gr § 375

अनमिसविगुरु [1] घर्मे भविष्यति

16.11 सखि । प्रियंवदे ॥ रमणीयम् । मन्त्रयसे ।

17. 2 सखि । अनुसूये ॥ अतिपिनद्धेन । एतेन । वल्कलेन । प्रियंवदया । इदम् । पीडिता । अस्मि ॥ तत् [2] । शिथिलय । तावत् । एतत् ।

17. 4 अत्र । तावत् । पयोधरविस्तारयितारम् [3] । आत्मनः । यौवनारम्भम् । उपालभस्व ।

19. 1 सख्यौ ॥ एषः । वातेरितपल्लवाङ्गुलीभिः । किम् । अपि । व्याहरति । इव । माम् । चूतवृक्षकः ॥ तत् । यावत् । एनम् । संभावयामि ।

19. 4 सखि । शकुन्तले ॥ इह [4] । एव । मुहूर्तकं तिष्ठ ।

19. 5 किम् । निमित्तम् ।

19. 6 त्वया । समीपस्थितया । लतासनाथः । इव । अयम् । चूतवृक्षकः । प्रतिभाति ।

19. 8 अतः । एव । प्रियंवदा । इति । त्वम् । उच्यसे ।

20. 1 सखि । शकुन्तले ॥ इयम् । स्वयंवरवधूः । सहकारस्य । त्वया । कृतनामधेया । वनज्यौत्स्नी [5] । इति । नवमालिका ।

20. 3 सखि । अनुसूये ॥ रमणीयः । खलु । अस्य । पादपमिथुनस्य । व्यतिकरः । संवृत्तः ॥ इयम् । नवकुसुमयौवना । नवमालिका । अयम् । अपि । बद्धफलतया । उपभोगक्षमः । सहकारः । इति ।

20. 7 अनुसूये ॥ जानासि । किम् । निमित्तम् । शकुन्तला । वनज्यौत्स्नीम् । अतिमात्रम् । प्रेक्षते । इति ।

20. 9 न । खलु । विभावयामि ॥ कथय ।

20.10 यथा । वनज्यौत्स्नी । सदृशेन । पादपेन । संगता । तथा । अपि । नाम । अहम् । अपि । आत्मनः । अनुरूपम् । वरम् । लभेय । इति ।

20.12 एषः । आत्मनः । ते । चित्तगतः । मनोरथः ।

---

[1] Orig. °गरुकः, Gr. § 123. – [2] Orig. = तात् (Vedic for तस्मात्), Gr. § 425. – [3] Orig. °विस्तारयित्रकम्, Gr. § 600. – [4] Gr. § 266. – [5] Gr. § 215

